॥ अथ ॥

# अमरकोषः



## प्रथमं काण्डम् ।

[1]यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।
सेव्यतामक्षयो धीराः स श्रिये चामृताय च ॥१॥
[2]समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः ।
संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २ ॥
[3]प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् ।
स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥ ३ ॥
[4]भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः ।
कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥ ४ ॥

---

१ इदं ग्रन्थकारस्य ग्रन्थादौ मङ्गलम् । २ इयं ग्रन्थकारस्य प्रतिज्ञा ३ अत्र बाहु(ल्येन) रूपविशेषेण स्त्रीपुंनपुंसकं बोध्यम् क्वचित् साहचर्याज्ज्ञेयम् । ४ अत्राव्युत्पादि(तानां) नाम्नां भेदबोधनाय द्वन्द्वो न कृतः तथा एकशेषः क्रमं विहाय भिन्नलिङ्गानां मि(श्रीभावश्चापि) न कृतः साहचर्येण लिङ्गनिश्चयाभावप्रसङ्गात् । किं तु क्रमशः स्त्रीपुंन(पुंस)कानि पठितानि ।

[१]त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति।
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक्॥ ५ ॥

इति परिभाषा।

अथ स्वर्गवर्गः।

[२]स्वरव्ययं स्वर्गनाक त्रिदिव त्रिदशालयाः।
सुरलोको द्यो दिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्॥१

[३]अमरा निर्जरा देवास्त्रिदशाः विबुधाः सुराः।
सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः॥ २ ॥
आदितेया दिविषदो लेखा अदितिनन्दनाः।
आदित्या ऋभवोऽस्वप्नाः अमर्त्याऽअमृतान्धसः॥ ३।
बर्हिर्मुखाः क्रतुभुजो गीर्वाणाः दानवारयः।
वृन्दारकाः दैवतानि पुंसि वा देवताः स्त्रियाम्॥४

[४]आदित्यविश्ववसवस्तुषिताः भास्वरानिलाः।

---

१ लिङ्गत्रय समाहार बोधनाय त्रिष्विति पदम्। तथा च पुंसयोर्द्वयोरिति यत्र लिङ्गनिर्देशः तत्र तदेव शिष्टं लिङ्गं बोध्यम्। तथा तु अन्तो यस्य तत्त्वन्तम् अथ आदिर्यस्य तद् अथादिः। इदं द्वयं पूर्वेण न संबध्यते। २ नव स्वर्गनामानि। ३ षड्विंशतिर्देवतानां नामानि। ४ आदित्यादयः प्रत्येकं समुदायचारिणो देवताः तथाहि "आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः। वसवश्चाष्टसंख्याः षट्त्रिंशत्तुषिता मताः। आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः॥ महाराजिकनामानो द्वे शते विंशतिस्तथा। साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः"।

महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥ ५
[1]विद्याधराऽप्सरोयक्ष रक्षो गन्धर्व किन्नराः ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥ ६ ॥
[2]असुरा दैत्यदैतेयदनुजेन्द्रारि दानवाः ।
शुक्रशिष्याः दितिसुता पूर्व देवाः सुरद्विषः ॥ ७ ॥
[3]सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ॥
समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः ॥ ८ ॥
षड्भिज्ञो दशबलोऽद्वयवादी विनायकः ।
मुनीन्द्रः श्रीघनः शास्ता मुनिः [4]शाक्य मुनिस्तुयः॥९॥
स शाक्यसिंहः सर्वार्थः सिद्धः शौद्धोदनिश्च सः ॥
गौतमश्चार्कबंधुश्च मायादेवी सुतश्च सः ॥ १० ॥
[5]ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः ।
हिरण्यगर्भो लोकेशः स्वयम्भूश्चतुराननः ॥ ११ ॥
धाताब्जयोनिर्द्रुहिणो विरञ्चिः कमलासनः ।
स्रष्टाप्रजापतिर्वेधा विधाता विश्वसृड्विधिः ॥ १२ ॥
नाभिजन्माण्डजः पूर्वोनिधनः कमलोद्भवः ॥

---

१ एते प्रत्येकं देवयोनि नामानि । २ दश असुराणां नामानि ३ अष्टादश बुधस्य ।
[४] सप्त शाक्यमुने । ५ त्रिंशत्तिर्ब्रह्मणः ।

सदानन्दो रजोमूर्तिः सत्यको हंसवाहनः ॥ ११ ॥ )
[१]विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः ।
दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥ १२ ॥
दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः ।
पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ॥१४॥
उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ।
पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥ १५ ॥
देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः ।
वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥ १६ ॥
विश्वंभरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः ।
पुराणपुरुषो यज्ञपुरुषो नरकान्तकः ॥ १७ ॥
जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः ।
[२]वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः ॥ १८ ॥
[३]बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः ।
रेवतीरमणो रामः कामपालो हलायुधः ।
नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली ॥

१ पञ्चचत्वारिंशद्विष्णोर्नामानि । २ द्वे कृष्णतातस्य वसुदेवस्य । ३ षोडश बलरामस्य ।

संकर्षणः सीरपाणिः कालिन्दीभेदनो बलः ॥ १९ ॥
[1]मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ।
कन्दर्पो दर्पकोऽनङ्गः कामः पञ्च*शरः स्मरः ॥२०॥
शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः ।
पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥ २१ ॥
[2]ब्रह्मसूर्विश्वकेतुः स्यादनिरुद्ध उषापतिः ।
[3]लक्ष्मी पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥ २२ ॥
इन्दिरा लोकमाता मा क्षीरोदतनया रमा ।
( भार्गवी लोकजननी क्षीरसागर कन्यका ॥ )
[4]शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनम् ॥ २३ ॥
कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः ॥
चापः शार्ङ्गं मुरारेस्तु श्रीवत्सो लाञ्छनं स्मृतम् ॥२४॥

---

१ एकोनविंशतिःकामदेवस्यनामानि । *ः " अरविन्दमशोकञ्च चूतञ्च नवमल्लिका । नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः " इति ' उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा । संमोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः "इति च । २ चत्वारि प्रद्युम्नपुत्रस्य अनिरुद्धस्य । ३ एकादश लक्ष्मीनामानि । ४ विष्णोः शङ्खः पाञ्चजन्यः । चक्रं सुदर्शननामकम् । गदा कौमोदकी । खड्गः नन्दकः, मणिः कौस्तुभः चापः शार्ङ्गम् । वक्षस्यचिह्नं श्रीवत्सः ।

( [1]अस्यैवाश्वशैब्य सुग्रीव मेघपुष्प बलाहकाः ॥ २ ॥
सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गदः । )
[2]गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ॥
नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥ २५ ॥
[3]शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ।
ईश्वरः सर्व ईशानः शंकरश्चन्द्रशेखरः ॥ २६ ॥
भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।
मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥ २७ ॥
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।
वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥ २८ ॥
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।
हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥ २९ ॥
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।
व्योमकेशो भवो भीमः स्थाणू रुद्रः उमापतिः ॥ ३० ॥
(अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः ॥ २ ॥

---

१ अस्याश्वाश्च शैब्य, सुग्रीव, मेघपुष्प बलाहकाख्यश्चत्वारः । अस्यसारथिर्दारुकः । मन्त्री उद्धवः । अनुजः गदः । २ गरुडस्य नव नामानि । ३ शिवस्याष्टचत्वारिंशत् ।

कपर्दोऽस्य [1]जटाजूटः पिनाकोऽजगवं धनुः ।
प्रमथाः स्युः पारिषदा ब्राह्मीत्याद्यास्तु मातरः ॥ ३७ ॥
( ब्राह्मीमाहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराहीच तथेन्द्राणी चामुण्डा सप्तमातरः ॥)
[2]विभूतिर्भूतिरैश्वर्यं मणिमादिकमष्टधा ।
( अणिमा महिमाचैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वंचाष्टसिद्धयः ॥)
[3]उमा कात्यायनी गौरी काली हैमवतीश्वरी ॥ ३८
शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।
अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका ॥ ३९ ॥
आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ।
[4]विनायको विघ्नराजः द्वैमातुरगणाधिपाः ॥ ४० ॥
अप्येकदन्त हेरम्ब लम्बोदर गजाननाः ।
[5]कार्तिकेयो महासेनः शरजन्मा षडाननः ॥ ४१ ॥
पार्वती नन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ।

---

१ शिवस्य जटाजूटः कपर्दनामा । तस्य धनुः पिनाक अजगवं च द्वे । अस्य सहचराः प्रमथाः । "ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः" इति ब्राह्मीत्याद्याः सप्तनामानि २ त्रीणि ऐश्वर्यस्य । "अणिमा महिमा चैव गरिमा लघिमा तथा । प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः" इत्यष्टावैश्वर्यस्य भेदाः । ३ एकविंशतिः पार्वत्याः । ४ अष्टौ गणेशस्य । ५ सप्तदश स्कन्दस्य ।

बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ॥ ४२ ॥
षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ।
शृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः ॥४३॥
( कर्ममोटी तु चामुण्डा चर्ममुण्डा तु चर्चिका ॥ )
[2]इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः ।
वृद्धश्रवाः शुनासीरः पुरुहूतः पुरन्दरः ॥ ४४ ॥
जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।
सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥ ४५ ॥
वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।
जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४६ ॥
संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।
आखण्डलः सहस्राक्षः ऋभुक्षास्तस्य तु प्रिया ॥ ४७ ॥
[3]पुलोमजा शचीन्द्राणी नगरी [4]त्वमरावती ।
हयःउच्चैःश्रवाः सूतो [6]मातलिर्नन्दनं वनम् ॥ ४८ ॥
स्यात्प्रासादो [8]वैजयन्तो [9]जयन्तः पाकशासनिः ।
[10]ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ॥ ४९ ॥

---

१ नन्दिन पद्। २ पञ्चविंशतिरिन्द्रस्य। त्रीणि शचीदेव्याः। ४ एकमिन्द्रनगर्याः। ५ एकमुच्चैःश्रवसः ६ सारथेरेकम्। ७ एकम् उद्यानस्य। ८ एकं गृहस्य। ९ द्वे इन्द्रपुत्रस्य। १० चत्वारि इन्द्रगजस्य।

ह्रादिनी वज्रमस्त्री स्यात्[1]कुलिशं भिदुरं पविः ।
शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥ ५० ॥
[2]व्योम यानं विमानोऽस्त्री नारदाद्याः [3]सुरर्षयः ।
[4]स्यात्सुधर्मा देवसभा [5]पीयूषममृतं सुधा ॥ ५१ ॥
[6]मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ।
[7]मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ५१ ॥
[8]पञ्चैते देवतरवो मन्दारः पारिजातकः ।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥ ५३ ॥
[9]सनत्कुमारो वैधात्रः [10]स्वर्वैद्यावश्विनीसुतौ ।
नासत्यावश्विनौ दास्रावाश्विनेयौ च तावुभौ ॥ ५४ ॥
स्त्रियां [11]बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ।
[12]हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ॥ ५५ ॥
[13]अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ।

---

१ दशकं वज्रस्य । २ द्वे विमानस्य । ३ एकं देवर्षेः ४ द्वे देवसभायाः । ५ त्रीणि अमृतस्य । ६ चत्वारि मन्दाकिन्याः । ७ पञ्च मेरोः । ८ पञ्च देवतरोः । ९ द्वे सनकादयः । १० षट् अश्विनी कुमारयोः । ११ उर्वशीप्रमुखादयोऽप्सरसः स्वर्वेश्याः कथ्यन्ते । १२ हाहा हूहू इत्यादयः देवानां गन्धर्वाः । १३ चतुस्त्रिंशद् अग्निनामानि ।

कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५६ ॥
बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ।
आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥ ५७ ॥
रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।
हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ॥ ५८ ॥
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।
शुचिरप्पित्तमौर्वस्तु [1]वाडवो वडवानलः ॥ ५९ ॥
[2]वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखाः स्त्रियाम् ।
त्रिषु [3]स्फुलिङ्गोऽग्निकणः [4]सन्तापः संज्वरः समौ ॥ ६० ॥
(उल्कास्यान्निर्गतज्वाला भूतिर्भसितभस्मनी ) ॥ ४ ॥
क्षारो रक्षा च दावस्तु दवो वनहुताशनः ) ।
[5]धर्मराजः पितृपतिः समवर्ती परेतराट् ।
कृतान्तो यमुनाभ्राता शमनो यमराड्यमः ॥ ६१ ॥
कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ।
[6]राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आशरः ॥ ६२ ॥
रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः ।

---

१ अयं वडवाग्नेः २ पञ्च वह्नेर्ज्वालायाः. ३ द्वे अग्निकणिकायाः । ४ द्वे अग्निसन्तापयोः ५ यमस्य चतुर्दश नामानि ६ राक्षसस्य पञ्चदश ।

यातुधानः पुण्यजनो नैर्ऋतो यातु रक्षसी ॥ ६३ ॥
प्रचेता वरुणः पाशी यादसाम्पतिरप्पतिः ।
[२]श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६४ ॥
पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।
समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६५ ॥
नभस्वद्वातपवनपवमानप्रभञ्जनाः ।
([३]प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः) ॥६६॥
[४]प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।
शरीरस्था इमे [५]रंहस्तरसी तु रयः स्यदः ॥ ६७ ॥
जवोऽथ शीघ्रं [६]त्वरितं लघु क्षिप्रमरं द्रुतम् ॥
सत्वरं चपलं तूर्णमविलम्बितमाशु च ॥ ६८ ॥
[७]सततानारताश्रान्तसन्तताविरतानिशम् ।
नित्यानवरताजस्रमप्यथा[८]तिशयो भरः ॥ ६९ ॥

---

१ षट्कं वरुणस्य । वायोर्विंशतिर्नामानि । ३ द्वयं महावातस्य । स एव वृष्टिसहितश्चेत् झञ्झावात इत्युच्यते । ४ "हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले । उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः" इति इमे पञ्च शरीरस्था वायुभेदाः । ५ षट्कं वेगस्य । ६ एकादश शीघ्रस्य । ७ नवकं नित्यस्य । ८ अतिशयस्य चतुर्दश ।

अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ।
तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ॥ ७० ॥
क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामियत् ।
[1]कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ॥ ७१ ॥
मनुष्यधर्मा धनदो राजराजो धनाधिपः ।
किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ॥ ७२ ॥
यक्षैकपिङ्गलविलश्रीदपुण्यजनेश्वराः ॥
[2]अस्योद्यानं [3]चैत्ररथं, पुत्रस्तु [4]नलकूबरः ॥ ७३ ॥
[5]कैलासः स्थान [6]मलका पूर्विमानं [7]तु पुष्पकम् ।
[8]स्यात्किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः ॥ ७४ ॥
[9]निधिर्ना शेवधिर्भेदाः [10]पद्मशङ्खादयो निधेः ॥

॥ इति स्वर्गवर्गः ॥ १ ॥

[11]द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।

---

१ भेदोऽति पाटान्तरम् । २ सप्तदश कुबेरस्य । ३ अस्योद्यानस्यानस्य एकम् । ४ अस्य पुत्रस्यैकम् । ५ कैलासेति तत्स्थानस्य । ६ अलकेत्येकं नगर्याः । ७ अस्य विमानं पुष्पकम् । ८ चत्वारि अश्वमुखस्य । ९ द्वे सामान्यनिधेः । १० "महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव" इत्येते निधिभेदाः । ११ एकोनविंशतिः आकाशस्य ।

नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ॥ १ ॥
वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।
विहायसोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम् ॥ २ ॥
( तारापथोऽन्तरिक्षं च मेघाध्वा च महाबिलम् । )

इति व्योमवर्गः ॥ २ ॥

[१]दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।
[२]प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ॥ १ ॥
उत्तरा दिगुदीची स्याद्दिश्यं तु त्रिषु दिग्भवे ।
( अवाग्भवमवाचीनमुदीचीनमुदग्भवम् ।
प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु ॥ १ ॥
[३]इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत् ॥ २ ॥
( कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ।
रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः ।
बुधो बृहस्पतिश्चेति दिशां चैव तथा ग्रहाः ॥ २ ॥ )

---

१ पञ्चकं दिशाम् । २ ताः पूर्वदक्षिणपश्चिमाः क्रमेण प्राच्यवाचीप्रतीच्यः स्युः । उत्तरा दिक् उदीची । दिग्भवे दिश्यमित्येकम् । ३ इन्द्राद्योऽष्टौ क्रमात्पूर्वादीनां दिशां स्वामिनः । ४ इन्द्रद्वयोऽष्टौ क्रमाद्दिग्ग्रहाः ।

[1]ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ ३ ॥
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।
[2]करिण्योऽभ्रमुकपिला पिङ्गलानुपमाः क्रमात् ॥ ४ ॥
ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती ।
क्लीबाव्ययं [3]त्वपदिशं दिशोर्मध्ये विदिक्स्त्रियाम् ॥५॥
[4]अभ्यन्तरं त्वन्तरालं [5]चक्रवालं तु मण्डलम् ।
[6]अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥ ६ ॥
धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत् ।
घनजीमूतमुदिर जलमुग्धूमयोनयः ॥ ७ ॥
[7]कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम् ।
[9]स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ॥ ८ ॥
[10]शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा ।
तडित्सौदामनी विद्युच्चञ्चला चपला अपि ।
[11]स्फूर्जथुर्वज्रनिर्घोषो मेघज्योतिरिरम्मदः ॥

---

१ ऐरावत इत्यष्टौ क्रमाद्दिशां गजा २ अष्टौ दिग्गजानां स्त्रिय, ३ द्वे दिग्द्वयमध्यभागस्य । ४ द्वे अन्तरवकाशस्य । ५ द्वे मण्डलस्य । ६ पञ्चदश मे द्वे मेघसमूहस्य । ८ एकं मेघभवस्य । नव मेघशब्दस्य । १० दशकं विद्युत, । ११ द्वयं वज्रनिर्घोषस्य १२ द्वे मेघज्योतिष ।

[1]इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम् ॥ १० ॥
[2]वृष्टिर्वर्षं [3]तद्विघातेऽवग्राहावग्रहौ समौ ।
[4]धारासंपात आसारः [5]सीकरोऽम्बुकणाः स्मृताः ॥११॥
[6]वर्षोपलस्तु करका [7]मेघच्छन्नेऽह्नि दुर्दिनम् ।
[8]अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ॥ १२ ॥
अपिधानतिरोधानपिधानाच्छादनानि च ।
[9]हिमांशुचन्द्रमाश्चन्द्रः इन्दुःकुमुदबान्धवः ॥ १३ ॥
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः॥१४॥
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ॥
[10]कला तु षोडशो भागो[11]बिम्बोऽस्त्री मण्डलं त्रिषु१५
भित्तं [12]शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके ॥
[13]चन्द्रिका कौमुदी ज्योत्स्ना[14]प्रसादस्तु प्रसन्नता॥१६॥

---

१ त्रयमिन्द्रधनुषः । २ द्वयं मेघवर्षणस्य । ३ द्वयं वर्षप्रतिबन्धस्य । ४ द्वयं धाराणां निरन्तरपतनस्य ।५ एकं जलकणानाम् । ६ द्वे करकायाः । ७ एकं मेघच्छन्नदिनस्य । ८ षट्के आच्छादनस्य । ९ विंशतिर्नामानि चन्द्रमसः । १० चन्द्रमण्डलस्य षोडशो भागः कलानाम । ११ द्वे बिम्बस्य । १२ भित्तादिचतुष्कं खंडस्य । समे विभागेऽर्धं नपुंसकम् । १३ त्रयं चन्द्रप्रकाशस्य । १४ द्वयं नैर्मल्यस्य।

कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ॥
[२]सुषमा परमा शोभा [३]शोभा कान्तिर्द्युतिश्छविः ॥१७॥
[४]अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ॥
प्रालेयं मिहिका चाथ [५]हिमानी हिमसंहतिः ॥१८॥
शीतं [६]गुणे तद्वदर्थाः सुषीमः शिशिरो जडः ॥
तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥१९॥
[७]ध्रुव औत्तानपादिः स्या[८]दगस्त्यः कुम्भसम्भवः ॥
मैत्रावरुणिरस्यैव [९]लोपामुद्रा सधर्मिणी ॥ २० ॥
[१०]नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ॥
[११]दाक्षायण्योऽश्विनीत्यादितारा [१२]अश्वयुगश्विनी ॥२१॥
राधा [१३]विशाखा पुष्ये [१४]तु सिध्यतिष्यौ [१५]श्रविष्ठया ॥
समा धनिष्ठा स्युः प्रोष्ठपदा भाद्रपदाः [१६]स्त्रियः ॥२२॥

---

१ षट्कं चिह्नस्य । २ एकं परमशोभायाः । ३ चत्वारि शोभामात्रस्य । ४ षट्कं हिमस्य । ५ द्वे घनीभूतहिमस्य । ६ नपुंसकलिङ्गशीतशब्दस्य गुणे एव वृत्तिः । सुषीमादयः सप्त शीतयुक्तस्य तथा ते च त्रिलिङ्गाः । ७ द्वे ध्रुवस्य । ८ त्रयमगस्त्यस्य । ९ एकम् अगस्त्यपत्न्याः । १० षट्कं नक्षत्रमात्रस्य ११ अश्विन्यादिसप्तविंशतिनक्षत्राणि दाक्षायण्यसंज्ञानीत्येकम् । १२ द्वे अश्विनीनक्षत्रस्य । १३ द्वे विशाखायाः । १४ त्रयं तिष्यस्य । १५ द्वे धनिष्ठायाः । १६ द्वयं पूर्वाभाद्रपदोत्तराभाद्रपदयोः ।

[1]मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी ॥
इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः ॥ २३ ॥
[2]बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः ॥
जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ॥२४॥
[3]शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ॥
[4]अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥२५॥
[5]रौहिणेयो बुधः सौम्यः समौ [6]सौरिशनैश्चरौ ॥
[7]तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः ॥२६॥
सप्तर्षयो [8]मरीच्यत्रिमुखाश्चित्रशिखण्डिनः ॥
मरीचिरङ्गिरात्रिः पुलस्त्यः पुलहक्रतुः ॥
वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥
राशीनामुदयो [9]लग्नं ते तु मेषवृषादयः ॥ २७ ॥
[10]सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ॥

---

१ त्रयं मृगशीर्षस्य । शिरोदेशे याः पञ्च तारा निवसन्ति ता इल्वलाः । २ नव बृहस्पतेः । ३ षट्कं शुक्रस्य । ४ पञ्चकं मङ्गलस्य ५ त्रयं बुधस्य । ६-द्वे शनेः । ७ पञ्च राहोः । ८ मरीच्यत्रिमुखाः सप्तर्षयः चित्रशिखण्डिनामकाः । ते यथा "मरीचिरङ्गिराः अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥ एते सप्त शिखण्डिनामकाः ज्ञेयाः इति । ९ एकं राश्युदयस्य । ते राशयो यथा "मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके ॥ ॥ तुला च वृश्चिको धन्वी मकरः कुम्भमीनकौ," इति । १० सप्तत्रिंशत्सूर्यस्य ।

भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ २८ ॥
भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ॥
विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ॥ २९ ॥
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ॥
विभावसुर्ग्रहपतिस्त्विषां पतिरहर्पतिः ॥ ३० ॥
भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ॥
( पद्माक्षस्तेजसां राशिश्छायानाथस्तमिस्रहा ॥
कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ॥ ३ ॥
प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः ॥
इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः ) ॥४॥ )
[1]माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः ॥३१॥
[2]सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ॥
[3]परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ ३२ ॥
[4]किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः ॥
भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥३३॥

---

१ अथ सूर्यस्य पारिपार्श्वकानाह प्रत्येकम् । पार्श्वका यथा "शक्रोऽस्य वामपार्श्वे तु दण्डनायक" । वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो वामभागतः ॥ यमोऽपि दक्षिणे पार्श्वे [illegible]

स्युः [१]प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ॥
रोचिः शोचिरुभे क्लीबे [२]प्रकाशो द्योत आतपः ॥३४॥
कोष्णं[३] कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ॥
तिग्मं[४] तीक्ष्णं खरं [५]तद्वन्मृगतृष्णा मरीचिका ॥३५॥

॥ इति दिग्वर्गः ॥ ३ ॥

[६]कालो दिष्टोऽप्यनेहापि समयोऽप्यथ [७]पक्षतिः ॥
प्रतिपद्द्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः ॥ १ ॥
[८]घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ॥
[९]प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥
( व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते )
प्रभातं च [१०]दिनान्ते तु सायं संध्या पितृप्रसूः ॥
[११]प्राह्णापराह्णमध्याह्नास्त्रिसंध्यमथ [१२]शर्वरी ॥३॥
निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ॥

---

१ एकादश प्रभायाः । २ त्रयं सूर्यभासः ३ चतुष्टयं मीषदुष्णस्य । ४ त्रयम् उष्णस्य । ५ द्वयं मृगजलस्य ६ चत्वारि कालस्य । ७ द्वे प्रथमतिथेः । ८ पञ्चकं दिवसस्य । ९ षट्कं प्रभातस्य । १० चत्वारि दिनान्तस्य । ११ प्राह्णादय समाहारा त्रिसंध्यं क्षेत्रम् । १२ द्वादश रात्रेः ।

विभावरीतमस्विन्यौ रजनी यामिनी तमी ॥ ४ ॥
[1]तमिस्रा तामसी [2]रात्रिर्ज्योत्स्नी चन्द्रिकयान्विता ॥
आगामिवर्तमानाहर्युक्तायां निशि [3]पक्षिणी ॥ ५ ॥
[4]गणरात्रं निशा बह्वयः [5]प्रदोषो रजनीमुखम् ॥
[6]अर्धरात्रनिशीथौ द्वौ द्वौ [7]यामप्रहरौ समौ ॥ ६ ॥
स [8]पर्वसंधिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ॥
[9]पक्षान्तौ पञ्चदश्यौ द्वे [10]पौर्णमासी तु पूर्णिमा॥७॥
कलाहीने सानुमतिः पूर्णे राका निशाकरे ॥
[11]अमावास्या त्वमावस्या दर्शः सूर्येन्दुसङ्गमः ॥ ८ ॥
सा दृष्टेन्दुः [12]सिनीवाली सा नष्टेन्दुकला कुहूः ॥
[13]उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ॥ ९ ॥
[14]सोपप्लवोपरक्तौ [15]द्वावग्न्युत्पात उपाहितः ॥

---

१ तमिस्रेति तमोयुक्तरात्र्याः २ एकं प्रभायुक्तनिशायाः । ३ पूर्वापर दिनाभ्यां युक्तायां रात्रौ ४ एकं रात्रिसमूहस्य । ५ द्वे रात्रिप्रारम्भस्य । ६ द्वे रात्रिमध्यस्य । ७ द्वे प्रहरस्य । ८ प्रतिपत्पञ्चदश्योर्यदन्तरं स सन्धिः पर्व इत्येकम् । ९ द्वे पक्षान्ततिथ्योः १० द्वे शुक्लपक्षान्त्यतिथेः । सा पूर्णिमा कलाहीने चन्द्रे सत्यनुमतिः । पूर्णे चन्द्रे राकेति । ११ चत्वारि कृष्णपक्षान्त्यतिथेः । १२ इन्दुकलायुक्ता अमा सिनीवाली नष्टेन्दुकला कुहूसंज्ञका । १३ द्वे ग्रहणस्य । १४ राहुग्रस्तस्य चन्द्रस्य सूर्यस्य वा १५ द्वे वह्निकृतोपद्रवस्य ।

एकयोक्त्या [1]पुष्पवन्तौ दिवाकरनिशाकरौ ॥ १० ॥
[2]अष्टादश निमेषास्तु काष्ठाः त्रिंशत्तु ताः कला ॥
तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ॥ ११ ॥
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च ॥
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥ १२ ॥
द्वौ द्वौ मार्गादिमासौ स्यादृतुस्तैरयनं त्रिभिः ॥
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥ १३ ॥
समरात्रिन्दिवे काले [3]विषुवद्विषुवं च तत् ॥
(पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा ॥ १ ॥
नाम्ना स पौषी माघाद्याश्चैवमेकादशापरे )॥
[4]मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १४ ॥
[5]पौषे तैषसहस्यौ द्वौ [6]तपा माघेऽथ [7]फाल्गुने ॥

---

१ युगपद् उदयमापन्नौ सूर्याचन्द्रमसौ । २ अष्टादशनिमेषैः काष्ठा त्रिंशत्काष्ठाभिः कला, त्रिंशत्कलाभिः क्षणः, द्वादशभिः क्षणैर्मुहूर्तः त्रिंशन्मुहूर्तैरहोरात्रः पञ्चदशाहोरात्रः पक्षः शुक्लकृष्णभेदेन पक्षो द्विधा, ताभ्यामेको मासः द्वाभ्यां मार्गादिमासाभ्याम् ऋतुः, त्रिभिर्ऋतुभिरेकमयनं तत्सूर्यगतिभेदाद् द्विधा । सूर्यस्योत्तरगतिरुत्तरायणं दक्षिणगतिस्तु दक्षिणायनम्, ताभ्यां वत्सरः । ३ द्वे तुल्यरात्रिदिनस्य । ४ चत्वारि मार्गशीर्षस्य । ५ त्रीणि पौषस्य । ६ द्वे माघस्य । ७ त्रीणि फाल्गुनस्य ।

स्यात्तपस्यः फाल्गुनिकः [1]स्याच्चैत्रे चैत्रिको मधुः १५
[2]वैशाखे माधवो राधो ज्येष्ठे [3]शुक्रः [4]शुचिस्त्वयम् ॥
आषाढे [5]श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ॥१६॥
[6]स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ॥
[7]स्यादाश्विन इषोऽप्याश्वयुजोऽपि [8]स्यात्तु कार्तिके १७
बाहुलोर्जौ कार्त्तिकिको [9]हेमन्तः [10]शिशिरोऽस्त्रियाम् ॥
[11]वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म [12]उष्मकः ॥ १८ ॥
निदाघ उष्णोपगम उष्ण उष्मागमस्तपः ॥
स्त्रियां प्रावृट् [13]स्त्रियां भूम्नि वर्षा अथ [14]शरत्स्त्रियाम् ॥
[15]षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ॥
[16]संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः ॥ २० ॥
[17]मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः ॥

---

१ त्रयं चैत्रस्य। २ त्रीणि वैशाखस्य। ३ द्वे ज्येष्ठस्य। ४ द्वे आषाढस्य। ५ त्रीणि श्रावणस्य। ६ चत्वारि भाद्रपदस्य। ७ त्रीणि आश्विनस्य। ८ चत्वारि कार्त्तिकस्य। ९ एकं हेमन्तस्य। १० एकं शिशिरस्य। ११ त्रीणि वसन्तस्य। १२ सप्तकं ग्रीष्मस्य। १३ द्वे वर्षर्तोः। १४ एकं शरदः। १५ अमी षड्ऋतवो मार्गशीर्षादिमासानां षड्भिर्युग्मैः क्रमाद्भवन्ति। षट्कं संवत्सरस्य। १७ नृणां मासेन पैत्रोऽहोरात्रः, तत्र कृष्णपक्षो दिनं शुक्लपक्षो रात्रिः। नृणां वर्षेण देवानामहोरात्रः, उत्तरायणं दिनं दक्षिणायनं रात्रिः। देवा—

दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् ॥२१॥
मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ॥
[1]संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥२२॥
अस्त्री [2]पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम् ॥
कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम् ॥ २३ ॥
[3]स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ॥
[4]मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ॥ २४ ॥
स्यादानन्दथुरानन्द शर्मशातसुखानि च ॥
[5]श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥२५॥
भावुकं भविकं भव्यं कुशलं क्षेमम् अस्त्रियाम् ॥
शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ॥२६॥
[6]मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ ॥
प्रशस्तवाचकान्यमून्ययः [7]शुभावहो विधिः ॥ २७ ॥

---

युगसहस्रद्वयेन ब्रह्मणोऽहोरात्रः । ये दैवे युगसहस्रे ते मनुष्याणां स्थितिप्रलयकालौ । दिव्यानां युगानां या एकाधिका सप्ततिः तन्मन्वन्तरम् । १ पञ्च प्रलयस्य । २ द्वादश पापस्य । ३ षड्वर्गं धर्मस्य । ४ द्वादश हर्षस्य । ५ द्वादश कल्याणनामानि पापपुण्यशब्दौ तथा सुखादिशब्दाश्च त्रिलिङ्गेषु । ६ अमूनि पञ्च प्रशस्तवाचकानि । एवं शुभे स्यादृष्टस्य ।

[१]दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ॥
[२]हेतुर्ना कारणं बीजं निदानं[३] त्वादिकारणम् ॥२८॥
[४]क्षेत्रज्ञ आत्मा पुरुषः [५]प्रधानं प्रकृतिः स्त्रियाम् ॥
विशेषः कालिकोऽवस्था[६]गुणाः [७]सत्त्वं रजस्तमः ॥२९॥
[८]जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ॥
प्राणी[९] तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥३०॥
[१०]जातिर्जातं च सामान्यं [११]व्यक्तिस्तु पृथगात्मता ॥
[१२]चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ॥३१॥

॥ इति कालवर्गः ॥४॥

[१३]बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ॥
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥ १ ॥
धीर्धारणावती [१४]मेधा [१५]संकल्पः कर्म मानसम् ॥
( [१६]अवधानं समाधानं प्रणिधानं तथैव च ॥

---

१ षट्कं प्राक्तनकर्मणः । २ त्रयं हेतुमात्रस्य । ३ एकमुपादानकारणस्य । ४ त्रीणि आत्मनः । ५ द्वे सत्त्वादिगुणसाम्यावस्थायाः । ६ एकं यौवनादेः । ७ एते त्रयो गुणाः । ८ षट्कं जन्मनः । ९ षट्कं प्राणिनः । १० त्रयं घटत्वादिजातेः । ११ द्वे घटादिव्यक्तेः । १२ सप्तकं मनसः । १३ चतुर्दश बुद्धेः । १४ एकं धारणाबुद्धेः । १५ एकं मनोव्यापारस्य । १६ त्रयं समाधानस्य ।

[1]चित्ताभोगो [2]मनस्कारश्चर्चा संख्या विचारणा ॥ २ ॥
[3]विमर्शो भावना चैव वासना च निगद्यते ॥ )
[4]अध्याहारस्तर्क ऊहो विचिकित्सा[5] तु संशयः ॥
संदेहद्वापरौ चाथ समौ [6]निर्णयनिश्चयौ ॥ ३ ॥
[7]मिथ्यादृष्टिर्नास्तिकता [8]व्यापादो द्रोहचिन्तनम् ॥
समौ [9]सिद्धान्त राद्धान्तौ [10]भ्रान्तिर्मिथ्यामतिर्भ्रमः॥४॥
[11]संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ॥
अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ५ ॥
[12]मोक्षे धीर्ज्ञानमन्यत्र [13]विज्ञानं शिल्पशास्त्रयोः ॥ ,
[14]मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६ ॥
[15]मोक्षोऽपवर्गोऽथाज्ञानमविद्याहंमतिः स्त्रियाम् ॥
रूपं शब्दो गन्धरसस्पर्शाश्च [16]विषया अमी ॥ ७ ॥

---

१ द्वे मनसः सुखादौ तत्परत्वस्य । २ त्रीणि प्रमाणैरर्थपरीक्षणस्य । ३ त्रीणि पूर्वानुभूतादिस्मरणस्य । ४ त्रयं तर्कस्य । ५ चत्वारि संशयज्ञानस्य । ६ द्वे निश्चयज्ञानस्य । ७ द्वे परलोको नास्तीत्यादिबुद्धेः । ८ द्वे परद्रोहचिन्तनस्य । ९ द्वे सिद्धान्तस्य । १० त्रयमयथार्थज्ञानस्य । ११ दशकमङ्गीकारस्य । १२ एकं मोक्षमतेः । १३ एकं शिल्पशास्त्रबुद्धेः । १४ अष्टकं मोक्षस्य । १५ त्रयमज्ञानस्य । १६ पञ्चानामपि प्रत्येकस्य श्रोत्रिनामानि ।

गोचरा इन्द्रियार्थाश्च [1]हृषीकं विषयीन्द्रियम् ॥
[2]कर्मेन्द्रियं तु पाय्वादि [3]मनोनेत्रादि धीन्द्रियम् ॥ ८॥
[4]तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः ॥
तिक्तोऽम्लश्च रसाः पुंसि तद्वस्तु षडमी त्रिषु ॥ ९॥
विमर्दोत्थे [5]परिमलो गन्धे जन मनोहरे ॥
[6]आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमागुणात् ॥१०॥
[7]समाकर्षी तु निर्हारी [8]सुरभिर्घ्राणतर्पणः ॥
इष्टगन्धः सुगन्धि स्यादामोदी [9]मुखवासनः ॥ ११ ॥
[10]पूतिगन्धिस्तु दुर्गन्धो [11]विस्रं स्यादामगन्धियत् ॥
[12]शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ॥ १२ ॥
अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः ॥

---

१ ज्ञानेन्द्रियाणाम् । २ पायूपस्थादि कर्मेन्द्रियम् । "पायूपस्थं पाणिपादौ वाक्चेतीन्द्रियपञ्चकम् । उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः" इति । ३ मनोनेत्रादि धीन्द्रियम् । यथा "मनः कर्णौ तथा नेत्रं रसना च त्वचा सह । नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते" इति । ४ द्वे कटुका इति ख्यातम् । अमी षट् रसा उच्यन्ते । ५ एकं मर्दनजगन्धे । ६ एकमत्यन्तप्रमाकर्षिगन्धे । ७ द्वे दूरगामिनो गन्धस्य । ८ चत्वारि शोभनगन्धयुक्तस्य । ९ द्वे तालादेः । १० अनिष्टगन्धयुक्तस्य । ११ एकमपक्वमांसादिगन्धस्य । १२ षोडश नामानि शुक्लस्य ।

हरिणः पाण्डुरः [1]पाण्डुरीषत्पाण्डुस्तु धूसरः ॥ १३ ॥
[2]कृष्णो नीलासितश्यामकालश्यामलमेचकाः ॥
[3]पीतो गौरो हरिद्राभः [4]पालाशो हरितो हरित् ॥१४॥
[5]रोहितो लोहितो रक्तः [6]शोणः कोकनदच्छविः ॥
[7]अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु [8]पाटलः ॥ १५ ॥
[9]श्यावः स्यात्कपिशो [10]धूम्रधूमलौ कृष्णलोहिते ॥
[11]कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥
[12]चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।
गुणे [13]शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ॥१७॥

इति धीवर्गः ।

[14]ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ॥
व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥

---

१ द्वे ईषद्धवलस्य । २ सप्तकं नीलादिवर्णस्य । ३ त्रयं पीतस्य । ४ त्रयं हरिद्वर्णस्य । ५ त्रयं रक्तवर्णस्य । ६ एकं रक्तोत्पलसदृशस्य वर्णस्य । ७ एकमीषद्रक्तवर्णस्य । ८ एकं श्वेतामिश्ररक्तस्य । ९ द्वे धूम्रवर्णस्य । १० त्रयं कृष्णमिश्रलोहितवर्णस्य । ११ षट्कं पिङ्गलस्य । १२ षट्कं विचित्रवर्णस्य । १३ शुक्लादयः गुणमात्रे वर्तमाना अभिधेयलिङ्गाः । १४ त्रयोदश वचनस्य नामानि ॥

[1]अपभ्रंशोऽपशब्दः स्याच्छास्त्रे [2]शब्दस्तु वाचकः ॥
तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ॥ २ ॥
[3]श्रुतिः स्त्री वेद आम्नायस्त्रयी [4]धर्मस्तु तद्विधिः ॥
स्त्रियामृक्सामयजुषी इति वेदास्त्रय [5]स्त्रयी ॥ ३ ॥
शिक्षेत्यादि श्रुते[6]रङ्गमोङ्कारप्रणवौ [7]समौ ॥
[8]इतिहासः पुरावृत्तमु[9]दात्ताद्यास्त्रयः स्वराः ॥ ४ ॥
[10]आन्वीक्षिकी [11]दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः ॥
[12]आख्यायिकोपलब्धार्था [13]पुराणं पञ्चलक्षणम् ॥ ५ ॥
प्रबन्धकल्पना [14]कथा [15]प्रवह्लिका प्रहेलिका ॥
[16]स्मृतिस्तु धर्मसंहिता [17]समाहृतिस्तु संग्रहः ॥ ६ ॥

---

१ एकमपशब्दस्य । २ एकं व्याकरणादौ वाचकस्य । ३ चत्वारि वेदस्य । ४ एकं धर्मस्य । ५ एकं वेदत्रिकस्य । ६ एकं "शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दोविचितिरित्येष षडङ्गो वेद उच्यते" इति वेदस्याङ्गस्य । ७ द्वे ओङ्कारस्य ८ द्वे इतिहासस्य । ९ उदात्तः अनुदात्तः, स्वरत्रयस्य । १० एकं तर्कविद्यायाः । ११ एकमर्थशास्त्रस्य । १२ स्वयमनुभूतार्थप्रतिपादकस्य । १३ एकं पुराणस्य । तल्लक्षणं यथा "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम् ॥" इति । १४ एकं कथायाः । १५ द्वे यया परैः संदिह्यते तादृशगूढाभिधानस्य १६ एकं मन्वादिप्रणीतधर्मशास्त्रस्य । १७ एकं संग्रहस्य ।

[1]समस्या तु समासार्था [2]किंवदन्ती जनश्रुतिः ॥
[3]वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्याद[4]थाह्वयः ॥७॥
आख्याह्वे अभिधानं च नामधेयं च नाम च ॥
[5]हूतिराकारणाह्वानं [6]संहूतिर्बहुभिः कृता ॥ ८ ॥
[7]विवादो व्यवहारः स्याद्[8]उपन्यासस्तु वाङ्मुखम् ॥
[9]उपोद्घात उदाहारः [10]शपनं शपथः पुमान् ॥ ९ ॥
[11]प्रश्नोऽनुयोगः पृच्छा च [12]प्रतिवाक्योत्तरे समे ॥
[13]मिथ्याभियोगोऽभ्याख्यानमथ [14]मिथ्याभिशंसनम् ॥१०॥
अभिशापः [15]प्रणादस्तु शब्दः स्यादनुरागजः ॥
[16]यशः कीर्तिः समज्ञा च [17]स्तवः स्तोत्रं स्तुतिर्नुतिः ॥११॥
[18]आम्रेडितं द्विस्त्रिरुक्त [19]मुच्चैर्घुष्टं तु घोषणा ॥
[20]काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ॥१२॥

---

१ एकं समस्यापूर्तेः । २ द्वे लोकप्रवादस्य । ३ चत्वारि वस्त्वन्तरस्थलोकवृत्त-कथनस्य । ४ षट्कं नाम्नः । ५ त्रयमाह्वानस्य । ६ एकं बहुकृताया हूतेः । ७ द्वे ऋणदानादिनिमित्तविविधवादस्य । ८ द्वे वचनारम्भस्य । ९ द्वे प्रस्तावितदर्थचिन्तनस्य । १० द्वे शपथस्य । ११ त्रयं प्रश्नस्य । १२ द्वे प्रतिवचनस्य । १३ द्वे मिथ्याभियोगस्य । १४ द्वे कुत्सनादिमिथ्यादूषणवचनस्य । १५ एकं गुणानुरागोत्पन्नशब्दस्य । १६ त्रयं यशसः । १७ चत्वारि स्तुतेः । १८ एकं द्विस्त्रिवारोक्तस्य । १९ द्वे उच्चैर्घोषणस्य । २० एकं शोकभीतिविकारादिभिर्ध्वनेः ।

[1]अवर्णाक्षेप निर्वाद परीवादापवादवत् ॥
उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥ १३ ॥
[2]पारुष्यमतिवादः स्याद्[3]भर्त्सनं त्वपकारगीः ॥
यः सनिन्द उपालम्भस्तत्र [4]स्यात् परिभाषणम् ॥१४॥
तत्र [5]त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ॥
[6]स्यादाभाषणमालापः [7]प्रलापोऽनर्थकं वचः ॥ १५ ॥
[8]अनुलापो मुहुर्भाषा [9]विलापः परिदेवनम् ॥
[10]विप्रलापो विरोधोक्तिः [11]संलापो भाषणं मिथः॥१६॥
[12]सुप्रलापः [13]सुवचनमपलापस्तु निह्नवः ॥
[14]संदेशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे ॥१७॥

---

१ दश निन्दायाः। २ द्वे निष्ठुरभाषणस्य। ३ एकमपकारार्थकभाषणस्य। ४ एकं निन्दापूर्वोपालम्भस्य। ५ एकं परस्त्रीपुरुषसंयोगनिमित्तेन आक्रोशस्य। ६ द्वे अन्योन्यसंबोधनपूर्वकभाषणस्य। ७ एकमनर्थकवचनस्य। ८ द्वे बहुशो भाषस्य। ९ द्वे रोदनपूर्वकभाषणस्य। १० परस्परविरुद्धभाषणस्य। ११ एकम् अन्योन्यभाषणस्य। १२ द्वे सुभाषितस्य। १३ द्वे गोपन- कारिवचनस्य॥ १ चोद मर्षे पारियोगी ? शापा क्रोशौ दुरेषणा। अत्रो ३ पादे चतुःशपाप्रेम्ण मिथ्याभिशंसनम् इति अस्मिन्ने प्रश्नस्य भीषि शापवचनस्यनर्थप्रेष्या, अमूल भाषणस्य १४ द्वे दूतद्वारा संदिश्यमानवचनस्य।

[1]रुशती वागकल्याणी स्यात् [2]कल्या तु शुभात्मिका ॥
अत्यर्थमधुरं [3]सान्त्वं [4]सङ्गतं हृदयङ्गमम् ॥ १८ ॥
[5]निष्ठुरं परुषं [6]ग्राम्यमश्लीलं [7]सूनृतं प्रिये ॥
[8]सत्येऽथसंकुलक्लिष्टे परस्परपराहते ॥ १९ ॥
लुप्तवर्णपदं [9]ग्रस्तं [10]निरस्तं त्वरितोदितम् ॥
[11]अम्बूकृतं सनिष्ठीव[12]मबद्धं स्यादनर्थकम् ॥ २० ॥
[13]अनक्षरमवाच्यं स्या[14]दाहतं तु मृषार्थकम् ॥
([15]सोल्लुण्ठनं तु सोत्प्रासं [16]मणितं रतिकूजितम् ॥
[17]श्राव्यंहृद्यं मनोहारि विस्पष्टं प्रकटोदितम् ॥ १ ॥)
अथ [18]म्लिष्टमविस्पष्टं [19]वितथं त्वनृतं वचः ॥२१॥
[20]सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति ॥

---

१ एवं अकल्याण्या वाचः । २ एकमशुभात्मिकाया वाचः । ३ एकमत्यन्तमधुरस्य । ४ द्वे सम्बद्धवचनस्य । ५ द्वे कर्कशवचनस्य । ६ द्वे अश्लीलवचनस्य । ७ एकं प्रियसत्यवचनस्य । ८ द्वे पूर्वापर विरुद्धवचनस्य । ९ एकमसम्पूर्णोच्चारितस्य वचनस्य । १० एकं त्वरितोच्चारितस्य । ११ एवं लीलायुक्तभाषणस्य । १२ एकम् अनर्थक भाषणस्य । १३ द्वे मनक्षमनर्हस्य वचसः । १४ एकम् अत्यन्तामृतार्थं कस्य १५ द्वे सोपहासवचनस्य । १६ द्वे रतिसमयकूजितस्य १७ पञ्च स्पष्टवचनस्य । १८ द्वे अव्यक्तवचनस्य । १९ एकमनृतवचनस्य २० चत्वारि सत्यस्य

[1]शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ॥ २२ ॥
स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ॥
आरवारावसंरावविरावा अथ [2]मर्मरः ॥ २३ ॥
स्वनिते वस्त्रपर्णानां भूषणानां तु [3]शिञ्जितम् ॥
[4]निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ॥२४॥
वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः ॥
[5]कोलाहलः कलकलस्तिरश्चां [6]वाशितं रुतम् ॥ २५ ॥
स्त्री [7]प्रतिश्रुत्प्रतिध्वाने [8]गीतं गानमिमे समे ॥

इति शब्दादिवर्गः ॥ ६ ॥

[9]निषादर्षभगान्धारषड्जमध्यमधैवताः ॥
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥
[10]काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे ॥
[11]कलो [12]मन्द्रस्तु गम्भीरे [13]तारोऽत्युच्चैस्त्रयस्त्रिषु ॥२॥

१ एतदश शब्दमात्रस्य । २ एकं वस्त्रपर्णानां शब्दस्य । ३ एकं नूपुरादीनां शब्दस्य । ४ पञ्च वीणादिनादस्य । ५ द्वे बहुकृतस्पष्टशब्दस्य । ६ एकं पक्षिशब्दस्य । ७ द्वे प्रतिशब्दस्य । ८ द्वे गायनस्य । ९ इमे सप्त तन्त्रीभ्यः कण्ठाच्चोत्थिताः स्वराः षड्जं रौति मयूरस्तु गावो नर्दन्ति चार्षभम् । अजाविकौ तु गान्धारं क्रौञ्चो नदति मध्यमम् ॥ पुष्पसाधारणे काले कोकिलो रौति पंचमम् । अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः ॥ १० एकं सूक्ष्मशब्दस्य । ११ एकं श्रुतिसुखास्पष्टस्वरस्य । १२ एकं गम्भीरध्वनेः । १३ एकम् अत्युच्चध्वने. ।

[1]समन्वितलयस्त्वेक तालो [2]वीणा तु वल्लकी ।
विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥
[3]ततं वीणादिकं वाद्य[4]मानद्धं मुरजादिकम् ।
वंशादिकं तु [5]सुषिरं कांस्यतालादिकं [6]घनम् ॥ ४ ॥
चतुर्विधमिदं वाद्यं [7]वादित्रातोद्यनामकम् ।
[8]मृदङ्गा मुरजा भेदा[9]स्त्वङ्क्याालिङ्ग्योर्ध्वकास्त्रयः ॥५॥
[10]स्याद्यशः पटहो ढक्का [11]भेर्य्यामानकदुन्दभी ।
[12]आनकःपटहोऽस्त्री [13]स्यात्कोणो वीणादिवादनम्॥६॥
वीणादण्डः [14]प्रवालः [15]स्यात्ककुभस्तु प्रसेवकः ।
[16]कोलम्बकस्तु कायोऽस्या [17]उपनाहो निबन्धनम् ॥७॥

---

१ एकं सम्यनुगतगीतादिसाम्यस्य । २ त्रय वीणायाः । ३ ऐकं वीणादिवाद्यस्य । ४ एकं मृदङ्गादिवाद्यस्य । ५ एकं वेण्वादिवाद्यस्य । ६ एकं कांस्यतालादिवाद्यस्य । ७ एकं ततादिकचतुर्विधवाद्यस्य । ८ द्वे मृदङ्गस्य । ९ एते मयो मृदंगभेदाः । १० द्वे ढक्कायाः । ११ द्वे दुन्दुभेः १२ द्वे पटहस्य । १३ एकं वीणावादकचतुराङ्गुलिकाष्ठस्य । १४ एकं वीणादण्डस्य । १५ द्वे वीणाधःस्थभाण्डस्य । १६ एकं वीणाया दण्डादिसमुदायस्य । १७ एकं वीणाप्रान्ते [illegible]

वाद्यप्रभेदा [1]डमरुमड्डुडिण्डिमझर्झराः ।
मर्दलः पणवोऽन्ये च [2]नर्तकीलासिके समे ॥ ८ ॥
विलम्बितं द्रुतं मध्यं [3]तत्त्वमोघो घनं क्रमात् ।
[4]तालः कालक्रियामानं [5]लयः साम्यमथास्त्रियाम् ॥९॥
[6]ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ।
[7]तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ॥ १० ॥
[8]भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तके ।
[9]स्त्रीवेषधारी पुरुषो नाट्योक्तौ [10]गणिकाज्जुका ॥११॥
भगिनीपति[11]रावुत्तो [12]भावो[13] विद्वानथावुकः ।
जनको युवराजस्तु [14]कुमारो भर्तृदारकः ॥ १२ ॥
[15]राजा भट्टारको देवस्तत्सुता [16]भर्तृदारिका ।
[17]देवी कृताभिषेकायामितरासु तु [18]भट्टिनी ॥ १३ ॥

---

१ एते वाद्यविशेषाः । २ द्वे नर्तक्याः । ३ करचरणादिकृतविलम्बितद्रुतमध्यानां नृत्यादिक्रियाणां यथासंख्यं तत्त्वं ओघं घनमित्येकैकम् । ४ एकं कालक्रियानियमहेतोः । ५ एकं गीतावाद्यपादादिक्रियाणां क्रियाकालसाम्यस्य । ६ षट्कं नृत्यस्य । ७ द्वे नृत्यगीतवाद्यसंघस्य । ८ त्रयं स्त्रीवेषधारिनर्तकस्य । ९ अयमधिकारः । १० एकं गणिकायाः । ११ एकं भगिनीपतेः । १२ एकं विदुषः । १३ एकं जनकस्य । १४ द्वयोर्युवराजस्य । १५ द्वयं राज्ञः । १६ एकैकं [illegible] राज्ञीषु ।

[1]अब्रह्मण्यमवध्योक्तौ राजश्यालस्तु [2]राष्ट्रियः ।
[3]अम्बा [4]माताऽथ बाला स्या[5]द्वासुरार्यस्तु मारिषः ॥१४॥
[6]अत्तिका भगिनी ज्येष्ठा [7]निष्ठानिर्वहणे समे ।
[8]हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ॥१५॥
[9]अङ्गहारोऽङ्गविक्षेपो [10]व्यञ्जकाभिनयौ समौ ।
निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे [11]त्रिष्वाङ्गिकसात्त्विके ॥१६॥
[12]शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।
बीभत्सरौद्रौ च रसाः [13]शृङ्गारः शुचिरुज्ज्वलः ॥१७॥
[14]उत्साहवर्धनो वीरः [15]कारुण्यं करुणा घृणा ।
कृपा दयानुकम्पा स्यादनुक्रोशोऽप्यथो [16]हसः ॥१८॥
हासो हास्यं च [17]बीभत्सं विकृतं त्रिष्विदं द्वयम् ।
[18]विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ [19]भैरवम् ॥१९॥

---

१ द्वे नाट्योक्त्या नाट्यादिदोषोक्तिकरणे । २ एकं राजश्यालस्य । ३ द्वे मातुः । ४ द्वे कुमार्याः । ५ द्वे आर्यस्य ६ द्वे ज्येष्ठभगिन्याः । ७ द्वे नाटकपञ्चमसन्धेः । ८ नीचादितिसृणामाह्वाने हण्डे इत्यादि यथाक्रमम् । ९ द्वे नृत्यविशेषस्य । १० द्वे हस्तादिभिर्मनोभावप्रकाशकस्य अभिनान्तःकरणेन च कर्मणि(?) द्वयं संस्थन । १२ एतेऽष्टौ रसाः । १३ त्रयं शृंगारस्य । १४ द्वे वीररसस्य । १५ सप्तकं करुणस्य १६ त्रयं हास्यस्य । १७ द्वे बीभत्सस्य । १८ चत्वारि अद्भुतस्य । १९ एकं भयानकस्य ।

दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ।
भयङ्करं प्रतिभयं [1]रौद्रं तूग्रममी त्रिषु ॥ २० ॥
चतुर्दश [2]दरस्त्रासो भीतिर्भीः साध्वसं भयम् ।
विकारो मानसो [3]भावो[4]ऽनुभावो भावबोधकः ॥ २१ ॥
[5]गर्वोऽभिमानोऽहङ्कारो [6]मानश्चित्तसमुन्नतिः ।
( [7]दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः ॥ )
[8]अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥
रीढावमाननावज्ञावहेलनमसूर्क्षणम् ।
[9]मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा [10]साऽपत्रपाऽन्यतः ॥२३॥
[11]क्षान्तिस्तितिक्षा[12]ऽभिध्या तु परस्य विषये स्पृहा ।
[13]अक्षान्तिरीर्ष्या[14]ऽसूया तु दोषारोपो गुणेष्वपि ।२४।
वैरं [15]विरोधो विद्वेषो [16]मन्युशोकौ तु शुक् स्त्रियाम् ।

---

१ द्वे रौद्रस्य । २ षट्कं भयस्य । ३ एकं मनोविकारस्य । ४ एकं चित्तविकारस्य एवं चित्तद्वारे प्रकाशनस्य । ५ त्रयं गर्वस्य । ६ एकं चित्तसमुन्नतेः । ७ षट्कं मदस्य । ८ नवकं अनादरस्य । ९ षट्कं लज्जायाः । १० एकं परस्माल्लज्जायाः । ११ द्वे पराभ्युदयसहनस्य १२ एकं परविषयस्पृहायाः १३ द्वे पराभ्युदयासहनस्य । १४ एकं गुणेषु दोषारोपस्य । १५ त्रयं वैरस्य । १६ त्रयं शोकस्य ।

[1]पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २५ ॥
[2]कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ।
शुचौ तु चरिते [3]शील[4]मुन्मादश्चित्तविभ्रमः ॥ २६ ॥
[5]प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ [6]दोहदम् ।
इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः ॥२७॥
कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं [7]लालसा द्वयोः ।
[8]उपाधिर्ना धर्मचिन्ता [9]पुंस्याधिर्मानसी व्यथा ॥२८॥
[10]स्याच्चिन्ता स्मृतिराध्यान[11]मुत्कण्ठोत्कलिके समे ।
[12]उत्साहोऽध्यवसायः [13]स्यात्सवीर्यमतिशक्तिभाक् ॥२९॥
[14]कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ।
कुसृतिर्निकृतिः शाठ्यं [15]प्रमादोऽनवधानता ॥ ३० ॥
[16]कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ।

१ त्रयं पश्चात्तापस्य । २ सप्त कोपस्य । ३ एकं शुद्धाचरणस्य । ४ द्वे चेतसोऽनवस्थितेः । ५ पञ्च प्रेम्णः । ६ द्वादश अभिलाषस्य । ७ एकं महातर्षस्य । ८ द्वे धर्मचिन्तनस्य । ९ द्वे मनःपीडायाः । १० त्रयं स्मरणस्य । ११ द्वे उत्कण्ठायाः । १२ द्वे उत्साहस्य । १३ एकं सातिशयशक्तिवीर्यस्य । १४ नव शाठ्यस्य । १५ द्वे प्रमादस्य । १६ चत्वारि कौतुकस्य ॥

स्त्रीणां [1]विलासविब्बोकविभ्रमा ललितं तथा ॥३१॥
हेला लीलेत्यमीहावाः क्रियाः शृंगारभावजाः ।
[3]द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ॥ ३२ ॥
[3]व्याजोऽपदेशो लक्ष्यं च [4]क्रीडा खेला च कूर्दनम् ।
[5]घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ॥३३॥
[7]अवहित्थाऽकारगुप्तिः समौ [8]संवेगसंभ्रमौ ।
स्यादा[9]च्छुरितकं हासः सोत्प्रासः समनाक्[10]स्मितम्॥३४॥
मध्यमः स्या[11]द्विहसितं [12]रोमाञ्चो रोमहर्षणम् ।
[13]क्रन्दितं रुदितं क्रुष्टं [14]जृम्भस्तु त्रिषु जृम्भणम् ॥३५॥
[15]विप्रलम्भो विसंवादो [16]रिङ्गणं स्खलनं समे ।
[17]स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ ३६ ॥

---

१ अमी षट् शृङ्गाररससमुद्भूता हावा उच्यन्ते। २ षट्क क्रीडायाः। ३ अयं स्वरूपाच्छादनस्य। ४ अयं बाल्यलीलायाः। ५ अयं स्वेदस्य। ६ द्वे चेष्टानाशस्य। ७ द्वे स्वरूपगोपनस्य। ८ द्वे हर्षादिना कर्मसु त्वरणस्य। ९ एकं साभिप्रायहासस्य। १० एकं किंचिन्नताभिप्रायहासस्य। ११ एकं मध्यमाभिप्रायहासस्य॥ १२ द्वे रोमोद्गमस्य। १३ त्रीणि रुदितस्य। १४ द्वे जिमाई इतिख्यातायाः। १५ द्वे वञ्चनायुक्तभाषणस्य। १६ द्वे स्खलनादेश्चलनस्य। १७ पञ्च निद्रायाः।

[१]तन्द्री प्रमीला [२]भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम् ।
[३]अदृष्टिः स्यादसौम्येऽक्ष्णि [४]संसिद्धिप्रकृती त्विमे ॥३७॥
स्वरूपं च स्वभावश्च निसर्गश्चाथ [५]वेपथुः ।
कम्पोऽथ [६]क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥

॥ इति नाट्यवर्गः ॥

[७]अधोभुवनपातालं बलिसद्म रसातलम् ।
नागलोकोऽथ [८]कुहरं सुषिरं विवरं बिलम् ॥ १ ॥
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः ।
[९]गर्तावटौ भुवि श्वभ्रे सरन्ध्रे [१०]सुषिरं त्रिषु ॥ २ ॥
[११]अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।
ध्वान्ते गाढे [१२]ऽन्धतमसं क्षीणे[१३]ऽवतमसं तमः ॥ ३ ॥
विष्वक् [१४]सन्तमस [१५]नागाः काद्रवेयास्तदीश्वराः ।
[१६]शेषोऽनन्तो [१७]वासुकिस्तु सर्पराजोऽथ [१८]गोनसे ४

---

१ द्वे निद्रान्तालस्यस्य । २ त्रयं क्रोधादिजनितभ्रूवक्रतायाः । ३ एकं सरोषचक्षुषि । ४ पञ्च स्वभावस्य । ५ द्वे कम्पस्य ६ पञ्च उत्सवस्य । ७ पञ्च पातालस्य । ८ एकादश छिद्रमात्रस्य । ९ द्वे भूरन्ध्रस्य । १० एकं रन्ध्रयुक्ते वस्तुनि । ११ पञ्च अन्धकारस्य । १२ एकम् घनान्धकारस्य । १३ एकं क्षीणान्धकारस्य । १४ एकं सर्वव्यापिनोऽन्धकारस्य । १५ द्वे नागानाम् । १६ द्वयं नागस्वामिनः । १७ द्वे नागराजस्य १८ द्वे पाणव इति

तिलित्सः स्या[१]दजगरे शयुर्वाहस इत्युभौ ।
[२]अलगर्दो जलव्यालः समौ [३]राजिलडुण्डुभौ ॥ ५ ॥
[४]मालुधानो मातुलाहि[५]र्निर्मुक्तो मुक्तकञ्चुकः ।
[६]सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः ॥ ६ ॥
आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।
कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥
दर्वीकरो दीर्घपृष्ठो दन्दशूको विलेशयः ।
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥
( [७]लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा ।
कुम्भीनसः फणाधरो हरिर्भोगधरस्तथा ॥ १ ॥
अहेः शरीरं [८]भोगः [९]स्यादाशीरप्यहिदंष्ट्रिका । )
[१०]त्रिष्वाहेयं विषास्थ्यादि [११]स्फटायां तु फणा द्वयोः ।
समौ [१२]कञ्चुकनिर्मोकौ [१२]क्ष्वेडस्तु गरलं विषम् ॥ ९ ॥

---

ग्रंथान्तरम् । १ अजगरस्य । २ द्वे जलसर्पस्य । ३ द्वे डुण्डुभसर्पस्य । ४ द्वे चक्राकारचित्रसर्पस्य । ५ द्वे त्यक्तकञ्चुकस्य । ६ पञ्चत्रिंशतिः सर्पस्य । ७ लेलिहानादयो नव सर्पनामानि । ८ एकं सर्पशरीरस्य । ९ द्वे सर्पदंष्ट्रायाः । १० एकं सर्पविषास्थ्यादेः । ११ द्वे फणायाः । १२ द्वे त्वचः । १३ त्रयं विषमात्रस्य ।

पुंसि क्लीबे च [1]काकोलकालकूटहलाहलाः ।
सौराष्ट्रिकः शौल्किकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥
दारदो वत्सनाभश्च विषभेदा अमी नव ।
[2]विषवैद्यो जाङ्गुलिको [3]व्यालग्राह्यहितुण्डिकः ॥ ११ ॥
॥ इति पातालभोगिवर्गः ॥ ८ ॥
[4]स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ।
तद्भेदा [5]स्तपनावीचिमहारौरवरौरवाः ॥ १ ॥
संघातः कालसूत्रं चेत्याद्याः सत्वास्तु नारकाः ।
[6]प्रेता [7]वैतरणीसिन्धुः स्यादलक्ष्मीस्तु [8]निर्ऋतिः ॥२॥
[9]विष्टिराजूः [10]कारणा तु यातना तीव्रवेदना ।
[11]पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ॥ ३ ॥
स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् ।
॥ इति नरकवर्गः ॥ ९ ॥
[12]समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ।
उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः ॥ १ ॥

---

१ अमी नव स्थावर विषभेदाः । २ द्वे विषहारवैद्यस्य । ३ द्वे गारुडीति सर्पविदस्य । ४ चत्वारि नरकस्य । ५ नरकभेदस्य । ६ एकं नरकगतानां प्राणिनाम् । ७ एकं वैतरण्याः । ८ एकं नारकस्यालक्ष्म्याः । ९ द्वे नरकेऽज्ञप्रभेदस्य । १० त्रयं नारकीपीडायाः । ११ नव दुःखस्य । १२ पञ्चदश समुद्रस्य ।

रत्नाकरो जलनिधिर्यादः पतिरपाम्पतिः ।
तस्य प्रभेदाः [1]क्षीरोदो लवणोदस्तथापरे ॥ २ ॥
[2]आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ॥ ४ ॥
मेघपुष्पं घनरसस्त्रिषु द्वे [3]आप्यमम्मयम् ।
[4]भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ॥ ५ ॥
[5]महत्सूल्लोलकल्लोलौ स्यादावर्तो [6]ऽम्भसां भ्रमः ।
[7]पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ॥ ६ ॥
[8]चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः ।
[9]कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु ॥
[10]पारावारे परार्वाची तीरे [11]पात्रं तदन्तरम् ॥
[12]द्वीपोऽस्त्रिया[1]मन्तरीपं यदन्तर्वारिणस्तटम् ॥ ६ ॥

१ क्षीरोदलवणोदरसपुरसदधिसुरोदस्वादूदा इति समुद्रभेदस्य । २ सप्तविंशतिर्जलस्य । ३ द्वे जलविकारस्य । ४ चत्वारि तरङ्गे । ५ द्वयं महत्सूर्मिषु । ६ एकं जलभ्रमी भ्रमस्य । ७ चत्वारि जलबिन्दूनाम् । ८ चत्वारि चक्राकाररेखाजलाऽधोदानस्य । ९ पञ्च तीरस्य । १० यथासंख्यमेते पारावारतीरयोः । ११ एकं तन्मध्यवर्तिप्रदेशस्य । १२ द्वयं इति द्वीपस्य ।

तोयोत्थितं [1]तत्पुलिनं [2]सैकतं सिकतामयम् ।
[3]निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥ ९ ॥
[4]जलोच्छ्वासाः परीवाहाः [5]कूपकास्तु विदारकाः ।
[6]नाव्यं त्रिलिङ्गं नौतार्ये [7]स्त्रियां नौस्तरणिस्तरिः ॥ १० ॥
[8]उडुपं तु प्लवः कोलः [9]स्रोतोऽम्बुसरणं स्वतः ।
[10]आतरस्तरपण्यं स्याद्द्रोणी [11]काष्ठाम्बुवाहिनी ॥ ११ ॥
[12]सांयात्रिकः [13]पोतवणिक्कर्णधारस्तु नाविकः ।
[14]नियामकाः पोतवाहाः [15]कूपको गुणवृक्षकः ॥ १२ ॥
[16]नौकादण्डः क्षेपणी [17]स्यादरित्रं केनिपातकः ।
[18]अभ्रिः स्त्री काष्ठकुद्दालः [19]सेकपात्रं तु सेचनम् ॥ १३ ॥
[20]क्लीबेऽर्धनावं नावो [21]ऽर्धेऽतीतनौकेऽतिनु त्रिषु ।
त्रिष्वागाधा[22]त्प्रसन्नोऽच्छः [23]कलुषोऽनच्छ आविलः ॥ १४ ॥

---

१ एकं तोयनिर्गमस्थलस्य । २ द्वे प्रवृद्धजलस्य निर्गममार्गस्य ३ पङ्ककर्दमस्य । ४ द्वयं निर्गममार्गे, प्रवृद्धं जलं परिवहति तेषाम् । ५ द्वयं शुष्कनद्यादौ कृतजलार्थगर्त्तानाम् । ६ एकं नावा तरितुमर्हे जलादौ । ७ त्रयं नौकायाः । ८ प्रथमतरणे काष्ठ[illegible] ९ एकं स्वतोजलप्रवाहस्य १० द्वे नद्यादितरणे देयमूल्यस्य । ११ एकं द्रोणीति ख्यातस्य १२ समुद्रयात्रिकवणिजः । १३ द्वे नाविकस्य । १४ कर्णधारादिनियन्तॄणाम् । १५ द्वे नौबन्धनाय रज्जुबन्धनस्तम्भस्य । १६ द्वे बठ्ठा इति ख्यातस्य १७ द्वे क्षेपणी इति ख्यातस्य । १८ द्वे काष्ठकुद्दालस्य । १९ द्वे जलसेचनपात्रस्य । २० एकं नौकार्धस्य । २१ एकं नौकामतिक्रान्तनद्यादेः २२ । द्वे निर्मलस्य । २३ त्रयं जलमिश्रस्य ।

[1]निम्नं गभीरं गम्भीरं [2]मुत्तानं तद्विपर्यये ।
[3]अगाधमतलस्पर्शे [4]कैवर्ते दाशधीवरौ ॥ १५ ॥
[5]आनायः पुंसि जालं [6]स्याच्छणसूत्रं पवित्रकम् ।
[7]मत्स्याधानी कुवेणी स्याद्[8]बडिशं मत्स्यवेधनम् ॥ १६ ॥
[9]पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ।
विसारः शकुली चाथ [10]गडकः शकुलार्भकः ॥ १७ ॥
[11]सहस्रदंष्ट्रः पाठीन [12]उलूपी शिशुकः समौ ॥
[13]नलमीनश्चिलिचिमः [14]प्रोष्ठी तु शफरी द्वयोः ॥ १८ ॥
क्षुद्राण्डमत्स्यसंघातः [15]पोताधानमथो [16]झषाः ॥
रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ १९ ॥
तिमिङ्गिलादयश्चाथ [17]यादांसि जलजन्तवः ।
[18]तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ॥ २० ॥

१ त्रीणि गम्भीरस्य । २ एकं गम्भीरादितरस्मिन् । ३ द्वे अत्यन्त गम्भीरस्य । ४ त्रयं धीवरस्य । ५ द्वे जालस्य । ६ द्वे शणसूत्रजालस्य ७ द्वे मत्स्याधानकरण्डिकायाः । ८ द्वे गलइति ख्यातस्य । ९ अष्टौ मत्स्यस्य । १० द्वे गर इति प्रसिद्धमत्स्यस्य ११ द्वे बहुदंष्ट्रमत्स्यस्य १२ द्वे शिशुमाराकारमत्स्यस्य । १३ द्वे बंगस इति प्रसिद्धस्य । १४ द्वे सफरी इति ख्यातस्य । १५ एकं क्षुद्राणां च अण्डमत्स्यानां च तेषां । संघातस्य । १६ अन्ये मत्स्यभेदाः वक्ष्यन्ते नव पर्यायाः । १७ द्वे जलचरमात्रस्य । १८ जलजन्तुविशेषाः ।

[1]स्यात्कुलीरः कर्कटकः [2]कूर्मे कमठकच्छपौ ।
[3]ग्राहोऽवहारो [4]नक्रस्तु कुम्भीरोऽथ [5]महीलता ॥२१॥
गण्डूपदः किञ्चुलको [6]निहाका गोधिका समे ॥
[7]रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥ २२ ॥
[8]मुक्तास्फोटः स्त्रियां शुक्तिः[9] शंखः स्यात्कम्बुरस्त्रियौ।
[10]क्षुद्रशङ्खाः शङ्खनखाः[11]शम्बूका जलशुक्तयः २३
भेके [12]मण्डूकवर्षाभूशालूरप्लवदर्दुराः ॥
शिली[13]गण्डूपदी भेकी [14]वर्षाभ्वी [15]कमठीडुलिः२४
मद्गुरस्य प्रिया [16]शृंगी [17]दुर्नामा दीर्घकोशिका ॥
[18]जलाशयो जलाधारस्तत्रागाधजलो [19]ह्रदः॥ २५ ॥
[20]आहावस्तु निपानं स्यादुपकूपजलाशये ॥
पुंस्येवा[21]न्धुः प्रहिः कूप उदपानं तु पुंसि वा॥२६॥
[22]नेमिस्त्रिकास्य [23]वीनाहो मुखबन्धनमस्य यत् ॥

१ द्वे खेखडा इति ख्यातस्य । २ त्रीणि कच्छपस्य । ३ द्वे ग्राहस्य ४ द्वे कुम्भीर इति ख्यातस्य । ५ त्रीणि काडु इति ख्यातस्य । ६ द्वे जलगोधिकायाः । ७ त्रीणि जोंक इति ख्यातस्य । ८ द्वे शुक्तिकायाः । ९ द्वे शङ्खस्य । १० द्वे सूक्ष्मशङ्खानाम् । ११ एकं जलशुक्तीनाम् । १२ षड्भेकस्य । १३ द्वे स्वल्पगण्डूपदजातेः । १४ द्वे क्षुद्रभेकजातेः । १५ द्वे कूर्म्याः । १६ एकं मद्गुराख्यमत्स्यस्त्रियाः । १७ द्वे जलौकास्यजलचरस्य । १८ द्वे तडागादीनाम् १९ एकमगाधजलस्य । २० द्वे कूपोद्धृताम्बुस्थापनीयशिलादिरचितगर्तस्य । २१ चत्वारि विहीर इति ख्यातस्य । २२ एकं हातपहाट इति ख्यातस्य । २३ एकं कूपमुखबन्धनस्य ।

१पुष्करिण्यां तु खातं स्याद् २अखातं देवखातकम् ॥२७॥
३पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः ॥
४वेशन्तः पल्वलं चाल्पसरो ५वापी तु दीर्घिका ॥२८॥
६खेयं तु ७परिखाधारस्त्वम्भसां यत्र धारणम् ॥
८स्यादालवालमावालमावापोऽथ ९नदी सरित् ॥ २९ ।
तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ॥
स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा ॥ ३० ॥
(१०कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती )
११गंगा विष्णुपदी जह्नुतनया सुरनिम्नगा ।
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ ३१ ॥
१२कालिन्दी सूर्यतनया यमुना शमन स्वसा ॥
१३रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३२ ॥
१४करतोयासदानीरा १५बाहुदा सैतवाहिनी ॥

---

१ द्वे पुष्करिण्याः। २ द्वे अकृत्रिमखातस्य। ३ पञ्च तडागस्य। ४ आप्यल्पसरसः। ५ द्वे सरसोऽल्पवापिकायाः ६ चत्वारि इति ख्यातस्य। ७ एकं धरण इति ख्यातस्य। ८ त्रीणि वृक्षादिमूले जल धारणार्थं वेष्टितस्य। ९ द्वादश नद्याः। १० एतानि चत्वार्यपि नद्याः। ११ अष्टौ भागीरथ्याः १२ चत्वारि यमुनायाः। १३ चत्वारि नर्मदायाः। १४ द्वे गौरीविवाहकन्यादानोदकजातस्य। १५ द्वे कार्तवीर्यावतारितायाः।

[1]शतद्रुस्तु शुतुद्रिः [2]स्याद्विपाशा तु विपाट् स्त्रियाम् ३३
[3]शोणो हिरण्यवाहः स्यात्कुल्याल्पा कृत्रिमा सरित् ।
[5]शरावती वेत्रवती चन्द्रभागा सरस्वती ॥ ३४ ॥
कावेरी सरितोऽन्याश्च [6]सम्भेदः सिन्धुसङ्गमः ।
द्वयोः [7]प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ ॥ ४५ ॥
देविकायां सरय्वां च [8]भवेदाविकसारवौ ।
[9]सौगन्धिकं तु कल्हारं [10]हल्लकं रक्तसंध्यकम् ॥ ३६ ॥
[11]स्यादुत्पलं कुवलयमथ [12]नीलाम्बुजन्म च ।
इन्दीवरं च नीलेऽस्मिन् सिते [13]कुमुदकैरवे ॥ ३७ ॥
[14]शालूकमेषां कन्दः [15]स्याद्वारिपर्णी तु कुम्भिका ।
[16]जलनीली तु शैवालं शैवलोऽथ [17]कुमुदनी ॥ ३८ ॥
कुमुदिन्यां [18]नलिन्यां तु बिसिनीपद्मिनीमुखाः ।
वा पुंसि [19]पद्मं नलिनमरविन्दं महोत्पलम् ॥ ३९ ॥

---

१ द्वे शतद्रोः । २ द्वे पापमोचिन्याः । ३ द्वे शोणनदीति ख्यातस्य । ४ एवं कृत्रिमनद्याः । ५ एतापञ्चविशेषा. । ६ द्वे नदीसंगमस्य । ७ एकं मकर मुखादिरू पाया । ८ एवैवेदेवि कावरयूमवस्य । ९ द्वे शुक्लकरोमस्य । १० द्वे रक्तकह्लारस्य । ११ द्वे कुमुदस्य । १२ द्वे नीलकमलस्य । १३ द्वे शुभ्रकमलस्य । १४ एकमुत्पलविशेषा शाकरस्य । १५ द्वे जलकुम्भीति ख्यातायाः । १६ अयंशैवाल इतिख्यातस्य । १७ द्वे कुमुदिन्या । १८ अयंकनलिन्या । १९ षोडश कमलस्य ।

सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥
पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ ४० ॥
बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।
[1]पुण्डरीकं सिताम्भोजमथ [2]रक्तसरोरुहे ॥ ४१ ॥
रक्तोत्पलं कोकनदं [3]नालो नालमथास्त्रियाम् ।
[4]मृणालं बिसमब्जादिकदम्बे [5]षण्डमस्त्रियाम् ॥ ४२ ॥
[6]करहाटः शिफाकन्दः [7]किञ्जल्कः केसरोऽस्त्रियाम् ।
[8]संवर्तिका नवदलं [9]बीजकोशो वराटकः ॥ ४३ ॥

॥ इति वारिवर्गः ॥

[10]उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ।
पातालभोगि नरकं वारि चैषां च संगतम् ॥ २१ ॥
इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ २२ ॥
इत्यमरसिंहकृतौ नामलिङ्गानुशासने प्रथमं काण्डम् ।

---

१ द्वे सितकमलस्य। २ त्रयं रक्तकमलस्य। ३ द्वे पद्मादिदण्डस्य। ४ द्वे मृणालस्य। ५ एकमब्जादिसमूहस्य। ६ द्वे पद्मकन्दस्य। ७ द्वे केसरस्य। ८ द्वे पद्मादीनां नवदलस्य। ९ द्वे बीजकोशस्य। १० यथास्थानेऽस्मिन् प्रथमकाण्डे एते स्वर्गाद्यो वर्गा उक्ताः।

# द्वितीयं काण्डम् ।



[१]वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।
नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥
[२]भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा ।
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ॥२॥
सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा ।
गोत्रा कुः पृथ्वी पृथिवी क्ष्माऽवनिर्मेदिनी मही ।
[३] ( विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा॥३॥
भूतधात्री रत्नगर्भा जगती सागराम्बरा ॥ १ ॥
[४]मृन्मृत्तिका प्रशस्ता तु [५]मृत्सा मृत्स्ना च मृत्तिका ।
[६]उर्वरा सर्वसस्याढ्या [७]स्यादूषः क्षारमृत्तिका ॥ ४ ॥
[८]ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली ।
समानौ [९]मरुधन्वानौ द्वे [१०]खिलाप्रहते समे ॥ ५ ॥

---

१ अस्मिन् काण्डे साङ्गोपाङ्गाः पृथिव्यादयो वर्गा वक्ष्यः । २ सप्तविंशतिर्भूमेः ३ विपुले चेत्यादशानि भूमेः । ४ द्वे मृत्तिकायाः । ५ द्वे प्रशस्तमृदः । ६ एकं सर्व-सस्यमृत्तिकायाः । ७ द्वे क्षारमृत्तिकायाः ८ द्वयं क्षारवद्विशिष्टदेशस्य । १० द्वे ए-कृष्टदेशादेः ।

त्रिष्वथो [१]जगती लोको विष्टपं भुवनं जगत् ।
[२]लोकोऽयं [२]भारतं वर्षं शरावत्यास्तु योऽवधेः ॥ ६ ॥
देशः प्राग्दक्षिणः [३]प्राच्य [४]उदीच्यः पश्चिमोत्तरः ।
[५]प्रत्यन्तो म्लेच्छदेशः [६]स्यान्मध्यदेशस्तु मध्यमः ॥७॥
[७]आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः ।
[८]नीवृज्जनपदो [९]देशविषयौ तूपवर्तनम् ॥ ८ ॥
[१०]त्रिष्वागोष्ठान्नडप्राये [११]नड्वान्नड्वल इत्यपि ।
[१२]कुमुद्वान् कुमुदप्राये [१३]वेतस्वान् बहुवेतसे ॥ ९ ॥
[१४]शाद्वलः शादहरिते सजम्बाले तु [१५]पङ्किलः ।
[१६]जलप्रायमनूपं स्यात्पुंसि [१७]कच्छस्तथाविधः ॥१०॥

---

१ पञ्च भुवनस्य । २ समुद्रावधि वर्तमानो लोकः । उक्तं च–उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः इति । ३ एकं शरावत्या अवधेः प्राग्दक्षिणदेशस्य । ४ एकं शरावत्या अवधेः पश्चिमोत्तरदेशस्य । ५ द्वे शिष्टाचाररहितम्लेच्छादिदेशस्य । ६ द्वे मध्यदेशस्य । ७ विन्ध्यहिमाचलमध्यगतस्य । ८ द्वे राष्ट्रस्य । ९ त्रीणि देशमात्रस्य । १० गोष्ठशब्दमभिव्याप्य सर्वत्र आप्रतिपुंस्त्रीत्वादयः । ११ द्वे नड्वलदेशस्य । १२ एकं कुमुदबहुलस्य । १३ एकं बहुवेतसदेशस्य । १४ एकं बालतृणयुक्तदेशस्य । १५ एकं कर्दमदेशस्य । १६ द्वे जलबहुलदेशस्य । १७ एकं तथाभूतजलदेशस्य ॥

स्त्री [1]शर्करा शर्करिलः शार्करः [2]शर्करावति ।
देशएवादिमावेवमुन्नेयाः सिकतावति ॥ ११ ॥
देशो नद्यम्बुवृष्ट्यम्बु संपन्न व्रीहिपालितः ।
[3]स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२
सुराज्ञि देशे [4]राजन्वान् स्यात्ततोऽन्यत्र [5]राजवान् ।
[6]गोष्ठं गोस्थानकं तत्तु [7]गौष्ठीनं भूतपूर्वकम् ॥ १३ ॥
[8]पर्यन्तभूः परिसरः [9]सेतुराली स्त्रियां पुमान् ।
[10]वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम् ॥ १४ ॥
[11]अयनं वर्त्म मार्गाध्व पन्थानः पदवी सृतिः ॥
सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ १५ ॥
[12]अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि ॥
[13]व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥१६॥

---

द्वे शर्करायुक्तदेशस्य । २ द्वे सिकतायुक्तदेशस्य । ३ नद्यम्बुभिर्वृष्ट्यम्बुभिश्च सम्पन्नव्रीहिभिः पालितदेशस्य यथाक्रममेकैकम् । ४ एकं यत्रधीरो राजा तत्र देशस्य । ५ एकं राजमात्रयुक्तस्य । ६ द्वे गवां स्थानस्य ७ । एकं पूर्वं यत्र गाव आसन् तत्स्थानस्य । ८ द्वे नदी पर्वतादीनामनुप्रान्तभुवः । ९ द्वे पूल इति ख्यातस्य । १० त्रीणि वल्मीकस्य । ११ द्वादश मार्गस्य । १ अयं शोभनमार्गस्य । १२ पञ्च दुर्मार्गस्य । २

१अपन्थास्त्वपथं तुल्ये २शृङ्गाटकचतुष्पथे ।
३प्रान्तरं दूरशून्योऽध्वा ४कान्तारं वर्त्म दुर्गमम् ॥ १७ ॥
५गव्यूतिः स्त्री क्रोशयुगं ६नल्वः किष्कुचतुःशतम् ।
७घण्टापथः संसरणं ८तत्पुरस्योपनिष्करम् ॥ १८ ॥
( ९द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ।
दिवस्पृथिव्यौ गञ्जा तु रुमा स्याल्लवणाकरः ) ॥१॥

इति भूमिवर्गः ॥ १ ॥

१०पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ॥ १ ॥
स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ॥ १ ॥
तच्छाखानगरं ११वेशो वेश्याजनसमाश्रयः ।
१२आपणस्तु निषद्यायां १३विपणिः पण्यवीथिका ॥ २॥
१४रथ्या प्रतोली विशिखा १५स्याच्चयो वप्रमस्त्रियाम् ।

---

द्वे कुमार्गस्य । २ द्वे चौमुहानी इति ख्यातस्य । ३ एकं छायाजलातिवर्जितदूरस्थमार्गस्य । ४ एकं चोरकण्टकाद्युपद्रवयुक्तमार्गस्य । ५ एकं क्रोशयुगस्य । ६ एकं चतुःशतहस्तपरिमितभूमेः । ७ द्वे राजमार्गस्य । ८ एकं नगरस्य संसरणमार्गस्य । ९ पञ्च द्यावाभूम्योः । १० सप्त नगरस्य । ११ द्वे वेश्यानिवासस्य । १२ द्वे क्रयविक्रयशालायाः । १३ द्वे क्रयवस्तुशालापङ्क्तेः । १४ त्रीणि ग्रामाभ्यन्तरमार्गस्य । १५ द्वे परिखोद्धृतमृत्तिकाकूटस्य ॥

[1]प्राकारो वरणः सालः [2]प्राचीनं प्रान्ततो वृतिः ॥ ३ ॥
[3]भित्तिः स्त्री कुड्य[4]मेडूकं यदन्तर्न्यस्तकीकसम् ॥
[5]गृहं गेहोदवसितं वेश्म सद्मनिकेतनम् ॥ ४ ॥
निशान्तपस्त्यसदनं भवनागारमन्दिरम् ॥
गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ॥ ५ ॥
[6] वासः कुटी द्वयोः शाला सभा [7]संजवनं त्विदम् ॥
चतुःशालं मुनीनान्त [8]पर्णशालोटजोऽस्त्रियाम् ॥६॥
[9]चैत्यमायतनं तुल्ये [10]वाजिशाला तु मन्दुरा ॥
[11]आवेशनं शिल्पिशाला [12]प्रपा पानीयशालिका ॥७॥
मठश्छात्रादिनिलयो [14]गञ्जा तु मदिरागृहम् ॥
[15]गर्भागारं [16]वासगृहमरिष्टं सूतिकागृहम् ॥ ८ ॥
([17]कुट्टिमो स्त्री निबद्धा[18]भूश्चन्द्रशाला शिरोगृहम् ॥

१ त्रयं यष्टिकण्टकादिरचितवेष्टनस्य । २ एकं नगरादिप्रान्तमार्गकृतवेष्टनस्य । ३ द्वे भित्तेः । ४ एकमन्तर्न्यस्तकठिनद्रव्यभित्तेः । ५ षोडशगृहस्य ६ चत्वारि सभागृहस्य । ७ द्वे चौक इति प्रसिद्धस्य । ८ द्वे मुनिगृहस्य । ९ द्वे यज्ञायतनभेदस्य । १० द्वे अश्वशालायाः । ११ द्वे शिल्पिशालायाः । १२ द्वे पौसालाऔसाराइति ख्यातायाः । १३ एकम् शिष्यादिनिवासस्य । १४ द्वयं मद्यस्थानस्य । १५ द्वे गृहमध्यभागस्य । १६ द्वे प्रसवस्थानस्य । १७ एकं पक्कीजमीन इति ख्यातस्य । १८ द्वे गच्ची इति ख्यातस्य ।

[1]वातायनं गवाक्षोऽथ [2]मण्डपोऽस्त्री जनाश्रयः ॥
[3]हर्म्यादि धनिनां वासः [4]प्रासादो देवभूभुजाम् ॥९॥
[5]सौधोऽस्त्री राजसदनमुपकार्योपकारिका ॥
[6]स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥ १० ॥
विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ॥
स्त्र्यगारं भूभुजा[7]मन्तः पुरं स्यादवरोधनम् ॥ ११ ॥
शुद्धान्तश्चावरोधश्च [8]स्यादट्टः क्षौममस्त्रियाम् ॥
[9]प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥
[10]गृहावग्रहणी [11]देहल्यङ्गणं चत्वराजिरे ॥
अधस्ताद्दारुणि [12]शिला [13]नासा दारूपरि स्थितम् ॥१३॥
[14]प्रच्छन्नमन्तर्द्वारं [15]स्यात्पक्षद्वारं तु पक्षकम् ॥
[16]वलीकनीध्रे पटलप्रान्तेऽथ [17]पटलं छदिः ॥ १४ ॥
[18]गोपानसी तु वलभीछादने वक्रदारुणि ॥

१ द्वे गवाक्षस्य । २ द्वे मण्डपस्य । ३ एवं धनवतां गृहस्य । ४ एकं देवानां राज्ञां च गृहस्य । ५ चत्वारि राजगृहस्य । ६ एते देवानां राज्ञां च गृहभेदाः । ७ चत्वारि राजस्त्रीगृहस्य । ८ द्वे हर्म्यपुरोभागस्य । ९ त्रीणि ओटा इति ख्यातस्य । १० द्वे उदुम्बरस्य ( देहली ) । ११ त्रीणि प्राङ्गणस्य । १२ एकं द्वारस्तम्भाधः स्थितकाष्ठस्य । १३ एवं द्वारस्तम्भोपरि स्थितकाष्ठस्य । १४ द्वे खिडकी इति ख्यातस्य । १५ द्वे पार्श्वद्वारस्य । १६ द्वे पटलप्रान्ते गृहाच्छादनस्य । १७ द्वे छादनस्य । १८ द्वे पटलाधारभूतवक्रकाष्ठस्य ।

[1]कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम् ॥ १५ ॥
स्त्री [2]द्वार्द्वारं प्रतीहारः स्या[3]द्वितर्दिस्तु वेदिका ॥
[4]तोरणोऽस्त्री बहिर्द्वारं [5]पुरद्वारं तु गोपुरम् ॥ १६ ॥
कूटं पूर्द्वारि [6]यद्धस्तिनखस्तस्मिन्नथ त्रिषु ॥
[7]कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना ॥ १७ ॥
[9]आरोहणं स्यात्सोपानं [10]निश्रेणिस्त्वधिरोहिणी ॥
[11]संमार्जनी शोधनी [12]स्यात्संकरोऽवकरस्तथा ॥ १८ ॥
क्षिप्ते [13]मुखं निःसरणं [14]संनिवेशो निकर्षणम् ॥
समौ [15]संवसथग्रामौ [16]वेश्मभूर्वास्तुरस्त्रियाम् ॥ १९ ॥
ग्रामान्त [17]उपशल्यं [18]स्यात्सीमसीमे स्त्रियामुभे ॥
[19]घोष आभीरपल्ली [20]स्यात्पक्कणः शबरालयः ॥२०॥

इति पुरवर्गः ॥ २ ॥

---

१ द्वे काष्ठादिरचितपक्षिगृहस्य । २ द्वौ द्वारस्य । ३ द्वे वेद्याः । ४ द्वे द्वारबाह्यभागस्य । ५ द्वे नगरद्वारस्य । ६ एकं पूर्द्वारेषु रक्षणार्थं हस्तिमल्लकूटस्य । ७ द्वे कवाड इति ख्यातस्य । ८ एका अर्गला इति ख्यातस्य । ९ द्वे सोपानस्य । १० द्वयं शिडी इति ख्यातस्य । ११ द्वे केरसुणी इति ख्यातस्य । १२ द्वे केर इति ख्यातस्य । १३ गृहादेर्निर्गमनद्वारप्रदेशस्य । १४ द्वे समीचीनवासस्थानस्य । १५ द्वे ग्रामस्य । १६ द्वे गृहरचनावच्छिन्नभूमेः । १७ एकं ग्रामसमीपभागस्य । १८ द्वे ग्राममर्यादायाः । १९ द्वे गोपालग्रामस्य २० द्वे भिल्लग्रामस्य ।

[1]महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ॥
अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ १ ॥
लोकालोकश्चक्रवाल [2]स्त्रिकूटस्त्रिककुत्समौ ॥
[3]अस्तस्तु चरमः [4]क्ष्माभृदुदयः पूर्व पर्वतः ॥ २ ॥
[5]हिमवान्निषधो विन्ध्यो माल्यवान् पारियात्रकः ॥
गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥
[6]पाषाणप्रस्तरग्रावोपलाश्मानः शिलादृषत् ॥
[7]कूटोऽस्त्री शिखरं शृङ्गं [8]प्रपातस्त्वतटो भृगुः ॥ ४ ॥
[9]कटकोऽस्त्री नितम्बोऽद्रेः [10]स्नुः प्रस्थः सानुरस्त्रियाम्
[11]उत्सः प्रस्रवणं [12]वारिप्रवाहो निर्झरो झरः ॥ ५ ॥
[13]दरी तु कन्दरो वा स्त्री [14]देवखातबिले गुहा ॥
गह्वरं [15]गण्डशैलास्तु च्युताः स्थूलोपला गिरेः । ६ ॥
( [16]दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ॥ )

---

१ अष्टौ पर्वतस्य, २ द्वे सप्तद्वीपवर्तिभूमेः प्राकारभूगिरौ, ३ द्वे त्रिकूटपर्वतस्य, ४ द्वे अस्ताचलस्य, ५ द्वे उदयाचलस्य, ६ एते सप्तपर्वतविशेषाः, ७ सप्त पाषाणस्य, ८ अयं पर्वत मध्यभागस्य, ९ अयं पर्वतात्पतनस्थानस्य, १० एकं पर्वत मध्यमागस्य, ११ त्रीणि पर्वतसमभूमागस्य, १२ द्वे जलस्यबहुलीभवनस्थानस्य, १३ त्रीणि निर्झरस्य, १४ द्वे कन्दरस्य, १५ त्रीणि अकृत्रिमबिलस्य, १६ एक गिरिच्युत स्थूलपाषाणानाम्, १७ एकं गिरितिर्यक्प्रदेश निर्गतपाषाणस्य ।

[1]खनिः स्त्रियामाकरः [2]स्यात्पादाः प्रत्यन्तपर्वताः ।
उपत्यकाद्रेरासन्ना [4]भूमिरूर्ध्वमधित्यका ॥ ७ ॥
[5]धातुर्मनः शिलाद्यद्रेर्गैरिकं तु विशेषतः ।
सुवर्णं रौप्य ताम्राणि हरितालंमनःशिला ।
गैरिकाञ्जन कासीस सीश लोहा सहिङ्गुला ॥
गन्धकोभ्रकइत्याद्याधातवो गिरिसम्भवाः ।
निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥

॥ इति शैलवर्गः ॥ ३ ॥

अटव्यरण्यं विपिनं गहनं काननं वनम् ॥
[8]महारण्यमरण्यानी [9]गृहारामास्तु निष्कुटाः ॥ १ ॥
[10]आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ॥
आमात्यगणिकागेहोपवने [11]वृक्षवाटिका ॥ २ ॥
पुमानाक्रीड [12]उद्यानं राज्ञः साधारणं वनम् ॥
स्यादेतदेव [13]प्रमदवनमन्तः पुरोचितम् ॥ ३ ॥

---

१ द्वे आकरस्य । २ द्वे पर्वतसमीपस्थालनर्वताम । ३ एकमद्रेः सन्निहितभूमेः । ४ एकमद्रेरूर्ध्वभूमेः । ५ पर्वतधातवो यथा "सुवर्णरौप्यताम्राणि हरितालं मनः शिला । गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः ॥ गन्धकोभ्रक इत्याद्या धातवो गिरिसंभवाः" इति । ६ द्वे स्वाच्छादितस्थाने । ७ षट् वनस्य । ८ द्वे महतो वनस्य । ९ द्वे गृहसमीपस्थकृत्रिमवनेषु । १० द्वे कृत्रिमवनस्य । ११ एकममात्यगणिकागेहोपवनस्य । १२ द्वे राज्ञः साधारणवनस्य । १३ एकं राज्ञीक्रीडोचितवनस्य ।

[1]वीथ्यालिरावलिः पङ्क्तिः श्रेणी [2]लेखास्तु राजयः ॥
[3]वन्या वनसमूहे [4]स्यादङ्कुरोऽभिनवोद्भिदि ॥ ४ ॥
[5]वृक्षो महारुहः शाखी विटपी पादपस्तरुः ॥
अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ॥ ५ ॥
[6]वानस्पत्यः फलैः पुष्पात्तै[7]रपुष्पा[8]द्वनस्पतिः ॥
[8]ओषध्यः फलपाकान्ताः [9]स्युरवन्ध्यः फलेग्रहि ॥ ६ ॥
[10]वन्ध्योऽफलोऽवकेशी च [11]फलवान् फलिनः फली ॥
[12]प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥
फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु ॥
[13]स्थाणुर्वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः [14]क्षुपः ॥ ८ ॥
अप्रकाण्डे [15]स्तम्बगुल्मौ [16]वल्ली तु व्रततिर्लता ॥
लताप्रतानिनी [17]वीरुद्गुल्मिन्युलप इत्यपि ॥ ९ ॥
नगाद्यारोह [18]उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ॥
अस्त्री [19]प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ॥ १० ॥
समे [20]शाखालते [21]स्कन्धशाखा शाले [22]शिफाजटे ॥

१ पञ्च पङ्क्तेः, २ द्वे लेखानाम। ३ एकं वनसमूहस्य। ४ एकमङ्कुरस्य। ५ त्रयोदश वृक्षस्य, ६ एकं पुष्पाज्जातफलोपलक्षितवृक्षस्य, ७ एकं पुष्पजात फलीरहितस्य, ८ एकं फलपाकेऽन्तो यासामोषधीनाम्, ९ द्वे फलधरवृक्षस्य, १० त्रयं फलहीनवृक्षस्य, ११ त्रीणि सफलस्य, १२ अष्टौ पुष्पितस्य, १३ त्रीणि छिन्नविटपस्य, १४ एकं ह्रस्वशाखामूलस्य, १५ द्वे काण्डरहितस्य, १६ त्रयं लतायाः, १७ प्रतानादि विस्तृतशाखायाः १८ त्रयं वृक्षादीनामुच्चत्वस्य १९ द्वे वृक्षस्य मूलमारभ्य शाखापर्यन्त भागस्य, २० द्वे शाखायाः, २१ द्वे प्रधानशाखायाः २२ द्वे वृक्षमूलस्य।

[1]शाखशिफावरोहः स्यान्मूलाच्चाग्रं गता लता ॥११॥
शिरोऽग्रं [2]शिखरं वा ना [3]मूलं बुध्नोऽङ्घ्रिनामकः ।
सारो मज्जा नरि [4]त्वक् स्त्रीवल्कं वल्कलमस्त्रियाम् ॥१२॥
काष्ठं [6]दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् ॥
[8]निष्कुहः कोटरं वा ना [9]वल्लरिर्मञ्जरिः स्त्रियौ ॥१३॥
[10]पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ॥
[11]पल्लवोऽस्त्री किसलयं विस्तारो [12]विटपोऽस्त्रियाम् १४
वृक्षादीनां फलं [13]सस्यं [14]वृन्तं प्रसवबन्धनम् ॥
आम्रे फल [15]शलाटुःस्याच्छुष्के [16]वानमुभे त्रिपु १५
[17]क्षारको जालकं क्लीबे [18]कलिका कोरकः पुमान् ।
[19]स्याद्गुच्छकस्तु स्तबकः[20]कुड्मलोमुकुलोऽस्त्रियाम् ॥
स्त्रियः [21]सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ॥

---

१ एकं मूलादग्रगतायाः लतायाः। २ एकं शिरसाग्रस्य। ३ त्रीणि वृक्षदेशस्य ४ द्वे वृक्षसारान्तरस्य। ५ त्रयं त्वचः। ६ द्वे काष्ठमात्रस्य। ७ पञ्च वह्निसन्दीपनकाष्ठादेः ८ द्वे वृक्षगतविवरस्य। ९ द्वे मञ्जर्याः। १० षट्कं पत्रस्य। ११ द्वे पत्रादि पुष्पशाखान्तरस्यापि। १२ एकं विस्तारस्य, १३ एकं फलस्य। १४ एकं वृन्तस्य। १५ एकमाम्रफलस्य। १६ एकं शुष्कफलस्य। १७ द्वे नूतनकलिकायाः। १८ द्वे अस्फुटितपुष्पस्य। १९ द्वे कलिकामात्रगुच्छस्य। २० द्वे ईषद्विकसितकलिकायाः। २१ पञ्च पुष्पस्य।

[1]मकरन्दः पुष्परसः [2]परागः सुमनोरजः ॥ १७ ॥
द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् ॥
[3]आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदीफले ॥ १७ ॥
बार्हतं च फले जम्बा [4]जम्बूः स्त्री जम्बु जाम्बवम् ॥
पुष्पे [5]जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ॥ १६ ॥
[6]विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला ॥
[7]बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥ २० ॥
अश्वत्थेऽथ [8]कपित्थे स्युर्दधित्थग्राहिमन्मथाः ॥
[9]तस्मिन् दधिफलः पुष्पफलदन्तशठावपि ॥ २१ ॥
उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥
[10]कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥
[11]सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ॥
[12]आरग्वधे राजवृक्षशम्याकचतुरङ्गुलाः ॥
आरेवतव्याधिघातकृतमालसुवर्णकाः ॥ २३ ॥
[13]स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ २४ ॥

---

१ द्वे पुष्परसस्य । २ द्वे पुष्परेणोः । ३ एवं कृतत्तद्वृक्षफलस्य । ४ त्रीणि जम्बूफले । ५ जातियूथिकादयः पुष्पे स्वलिङ्गाः । ६ एतामूलेपि स्वलिङ्गाः । पाटला पुष्पेवर्तमाना क्लीबे । ७ पञ्चकमश्वत्थस्य । ८ प्रसङ्गं कैथ इति ख्यातस्य । ९ चत्वारि उदुम्बरस्य (गुलर) । १० चत्वारि कचनार इति ख्यातस्य । 11 चत्वारि (छतवन) इतीख्यातस्य 12 अष्टौ बाहवा इती ख्यातस्य । १३ पञ्चकं जम्बीरस्य ।

[1]वरुणो वरुणः सेतुस्तिक्तशाकः कुमारकः ।
[2]पुंनागे पुरुषस्तुंगः केसरो देववल्लभः ॥ २५ ॥
[3]पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।
[4]तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥
वञ्जुलश्चित्रकृच्चाथ द्वौ [5]पीतनकपीतनौ ।
आम्रातके [6]मधूके तु गुडपुष्पमधुद्रुमौ ॥ २७ ॥
वानप्रस्थमधुष्ठील जलजेऽत्र [7]मधूलकः ।
[8]पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसंभवे ॥ २८ ॥
[9]अक्षोटकन्दरालौ [10]द्वावङ्कोटे तु निकोचकः ।
[11]पलाशे किंशुकः पर्णो वातपोतोऽथ [12]वेतसे ।
रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः ॥ २९ ॥
द्वौ [13]परिव्याधविदुलौ नादेयी चाम्बुवेतसे ॥ ३० ॥
[14]शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः ।

---

१ पञ्च वादरणो इति ख्यातस्य । २ पञ्च केशरपुष्पस्य । ३ चत्वारि निम्बतरोः । ४ एतद्वे तिनश इति ख्यातस्य । ५ अयं अंबाडा इति ख्यातस्य । ६ पञ्चकं महुवा इति ख्यातस्य । ७ एकं जलजेमधूके । ८ पीलु अरायेड इति प्रसिद्धस्य । ९ द्वयं पहाडा इति ख्यातस्य । १० द्वे चिम्बा इति ख्यातस्य । ११ चत्वारि पलाशस्य । १२ एतत् वेतसस्य । १३ चत्वारि अम्बुवेतसस्य । १४ पञ्चकं सहिजन इति ख्यातस्य ॥

रक्तोऽसौ [1]मधुशिग्रः [2]स्यादरिष्टः फेनिलः समौ ॥३१
[3]बिल्वे शाण्डिल्यशैलूषौ मालुर श्रीफलावपि ॥
[4]प्लक्षो जटी पर्कटी [5]स्यान्न्यग्रोधो बहुपाद्वटः ॥ ३२ ॥
[6]गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ।
[7]आम्रश्चूतो रसालोऽसौ [8]सहकारोऽतिसौरभः ॥ ३३ ॥
[9]कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ।
[10]शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ ३४ ॥
[11]राजादनं पियालः स्यात्सन्नकद्रुर्धनुःपटः ।
[12]गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ।
[13]कर्कन्धूर्बदरी कोली कोलं कुवलफेनिले ॥ ३६ ॥
सौवीरं बदरं घोण्टाप्यथ [14]स्यात्स्वादुकण्टकः ।
विकङ्कतः स्रुवावृक्षो [15]ग्रन्थिलो व्याघ्रपादपि ॥ ३७ ॥

---

१ एवं रक्तशोभः ( मुनगा ) २ रीठा इति ख्यातस्य । ३ पञ्चकं बिल्वस्य । ४ अयं पाकर इति ख्यातस्य । ५ अयं वटस्य । ६ षट्कं लोध्रस्य । ७ अयमाम्रस्य । ८ एकमतीसौरभाम्रस्य । ९ पञ्च गुग्गुलुवृक्षस्य । १० पञ्च श्लेष्मातकस्य । ११ चत्वारि चार इति ख्यातस्य । १२ गम्भारी इति ख्यातस्य । १३ शोणी बेर इति ख्यातस्य । १४ षट्कं बदरीतरुस्य । १५ पञ्च कटार इति ख्यातस्य ॥

[१]ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका ।
[२]तन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ॥३७॥
[३]काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके ।
[४]गोलीढो झाटलो घण्टा पाटलिर्मोचमुष्ककौ ॥ ३९ ॥
[५]तिलकः क्षुरकः श्रीमान् समौ [६]पिचुलझावुकौ ।
[७]श्रीपर्णिका कुमुदिका कुम्भीकैडर्यकट्फलौ ॥ ४० ॥
[८]क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ।
[९]तूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥ ४१ ॥
तूलं च [१०]नीपप्रियककदम्बास्तु हरिप्रियः ।
[११]वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ॥ ४२॥
[१२]गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः ।
प्लक्षश्च [१३]तिन्तिडी चिञ्चाम्लिकाथो [१४]पीतसारके४३

१ चत्वारि नारिंग इतिख्यातस्य । २ चत्वारि तिन्दु इतिख्यातस्य । ३ चत्वारि कुचला इतिख्यातस्य । ४ पञ्चश्योनाकवृक्षस्य । ५ त्रयं तिलकवृक्षस्य । ६ झावुकस्य भेदौ इति केचित् । ७ पञ्च कायफल इतिख्यातस्य । ८ चत्वारि लोध्रस्य । ९ षट् तूदस्य पारसपिपल इति ख्यातस्य तूत इति । १० चत्वारि कदम इति ख्यातस्य । ११ चत्वारि भलावा इति ख्यातस्य । १२ पञ्च पैडी इतिख्यातस्य । त्रयं चिञ्चायाः (अमिली) । १४ षट्कं विजयसार इति ख्यातस्य ।

सर्जनकासनबन्धूकपुष्पप्रियकजीवकाः ॥
[1]साले तु सर्जकार्श्याश्वकर्णकाः सस्यसंवरः ॥ ४४॥
[2]नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ॥
[3]राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ॥ ४५ ॥
[4]इङ्गुदी [5]तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ॥
[6]पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः॥४६॥
[7]पिच्छा तु शाल्मलीवेष्टे [8]रोचनः कूटशाल्मलिः ॥
[9]चिरिबिल्वो नक्तमालः करजश्च करञ्जके ॥ ४७ ॥
[10]प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ॥
करञ्जभेदाः [11]षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ॥ ४८ ॥
रोही [12]रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ॥
[13]गायत्री बालतनयः खदिरो दन्तधावनः ॥ ४९ ॥
[14]अरिमेदो विट्खदिरे [15]कदरः खदिरे सिते ॥

१ पञ्च शालवृक्षस्य । २ पञ्चकमर्जुनवृक्षस्य । ३ त्रयं खरणी इति ख्यातस्य । ४ द्वे इङ्गुद्या, जीवापूतो ञ्यूरो इति ख्यातस्य । ५ भीषिभूर्जवृक्षस्य । ६ पञ्च बेवर इति ख्यातस्य ॥ ७ एवं शाल्मलीनिर्यासस्य । ८ द्वे कृष्णशाल्मल्याः । ९ चत्वारि करञ्जवृक्षस्य । १० चत्वारि काँटे करञ्ज इति ख्यातस्य । एते त्रयः करञ्जभेदाः । १२ चत्वारि रक्तरोहित इति ख्यातस्य । १३ चत्वारि खदिरस्य । १४ द्वे दुर्गन्धिखदिरस्य । १५ द्वयं शुभ्रखदिरस्य ।

सोमवल्कोऽप्यथ [1]व्याघ्रपुच्छगन्धर्वहस्तकौ ॥ ५० ॥
एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ।
चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ॥ ५१ ॥
अल्पा शमी [2]शमीरः स्या[3]च्छमी सक्तुफला शिवा ।
[4]पिण्डीतको मरुबकः श्वसनः करहाटकः ॥ ५२ ॥
शल्यश्च मदने [5]शक्रपादपः पारिभद्रकः ।
भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥ ५३ ॥
पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ।
पाटलिः [6]पाटलाऽमोघा काचस्थाली फलेरुहा ॥ ५४ ॥
कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया ।
लता गोवन्दिनी गुन्द्रा [7]प्रियङ्गुः फलिनी फली ॥ ५५ ॥
विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा ।
[8]मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ॥ ५६ ॥
स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः ।
शोणकश्चारलुः [9]तिष्यफला त्वामलकी त्रिषु ॥ ५७ ॥

---

१ द्वयमेरण्डस्य । २ एकं शमीरस्य । ३ सर्वं शम्याः । ४ पदद्वयं मदनस्य इति ... । ५ सप्त देवदारुनामानि । ६ अत्र पाटला इति ... । ७ द्वादश प्रियङ्गुनाम । ८ द्वादश त्रिका इति स्योनाकस्य । ९ ... ।

अमृता च वयस्था च त्रिलिङ्गस्तु [1]विभीतकः।
नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥ ५८ ॥
[2]अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता।
हरीतकी हैमवती चेतकी श्रेयसी शिवा ॥ ५९ ॥
[3]पीतद्रुः सरलः पूतिकाष्ठं चाथ [4]द्रुमोत्पलः।
कर्णिकारः परिव्याधो [5]लकुचो लिकुचो डहुः ॥ ६० ॥
[6]पनसः कण्टकिफलो [7]निचुलो हिज्जलोऽम्बुजः।
[8]काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला ॥ ६१ ॥
[9]अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः।
पिचुमन्दश्च निम्बेऽथ [10]पिच्छिलाऽगुरुशिंशपाः ॥ ६२ ॥
कपिला [11]भस्मगर्भा सा [12]शिरीषस्तु कपीतनः।
भण्डिलोऽप्यथ [13]चाम्पेयश्चम्पको हेमपुष्पकः ॥ ६३ ॥
एतस्य कलिका [14]गन्धफली स्यादथ [15]केसरे।

---

१ षट्कं बहेड़ा इति ख्यातस्य। २ एकादश हरीतक्याः। ३ त्रयं देवदारु इति ख्यातस्य। ४ त्रयं कठचंपा इति ख्यातस्य। ५ त्रयं बड़हर इति ख्यातस्य। ६ द्वे कटहर इति प्रसिद्धस्य। ७ त्रीणि जलवेतभेदस्य समुद्रस्य। ८ चत्वारि कठुम्बरा इति ख्यातस्य। ९ षट्कं निम्बस्य। १० चत्वारि सिसौ इति ख्यातस्य। ११ एकं कृष्णसिसौ इति ख्यातस्य। १२ त्रयं शिरीषस्य। १३ त्रयं स्वर्णचम्पायाः। १४ एकम् स्वर्णचम्पकस्य कलिकायाः। १५ द्वे बकुलस्य (मौलसिरी)।

वकुले। [1]वञ्जुलोऽशोके समौ [2]करकदाडिमौ ॥ ६४ ॥
[3]चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ।
[4]जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥ ६५ ॥
[5]श्रीपर्णमग्निमन्थः स्यात्कणिका गणिकारिका ।
जयोऽथ [6]कुटजः शक्रो वत्सको गिरिमल्लिका ॥ ६६ ॥
एतस्यैव [7]कलिङ्गेन्द्रयवभद्रयवं फले ।
[8]कृष्णपाकफलाविग्नसुषेणाः करमर्दके ॥ ६७ ॥
[9]कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ [10]सिन्दुके
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ॥ ६८ ॥
[11]वेणी गरा गरी देवताडो जीमूत इत्यपि ।
[12]श्रीहस्तिनी तु भूरुण्डी [13]तृणशून्यं तु मल्लिका ॥ ६९ ॥
भूपदी शीतभीरुश्च [14]सैवास्फोटा वनोद्भवा ।
[15]शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ॥ ७० ॥
सिताऽसौ [16]श्वेतसुरसा भूतवेश्यथ [17]मागधी ।

---

१ द्वे अशोकस्य । २ द्वे दाडिमस्य । ३ चत्वारि नागचम्पायाः । ४ पंच अरणी, वा आयी इति ख्यातस्य । ५ पंच जयरणं इति ख्यातस्य । ६ चत्वारि कुरया इति ख्यातस्य । ७ त्रीणि कुटजफलस्य । ८ चत्वारि करोंदा इति ख्यातस्य । ९ त्रयं तमालस्य । १० पञ्च निर्गुण्डी इति ख्यातस्य । ११ पञ्च म्यौंडी इति ख्यातस्य १२ द्वे हस्तिकर्णाभपत्रस्य । १३ चत्वारि मल्लिकायाः ( वेली ) । १४ एकं रानमोगरी इति ख्यातस्य । १५ चत्वारि कृष्णनिर्गुण्ड्याः न्यवरीति ख्यातस्य । १६ द्वे श्वेतनिर्गुण्ड्याः । १७ चत्वारि यूथिकायाः ( जुई ) ।

गणिका यूथिकाऽम्बष्ठा सा पीता [1]हेमपुष्पिका ॥७१॥
[2]अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ।
[3]सुमना मालती जातिः [4]सप्तला नवमालिका ॥७२॥
[5]माध्यं कुन्दं [6]रक्तकस्तु बन्धूको बन्धुजीवकः ।
[7]सहा कुमारी [8]तरणिरम्लानस्तु महासहा ॥ ७३ ॥
तत्र शोणे [9]कुरबकस्तत्र पीते [10]कुरण्टकः ।
नीली झिण्टी [11]द्वयोर्बाणा दासी चार्तगलश्च सा ७४
[12]सैरेयकस्तु झिण्टी स्यात्तस्मिन् [13]कुरबकोऽरुणे ।
पीता [14]कुरण्टको झिण्टी तस्मिन् सहचरी द्वयोः ७५॥
[15]ओण्ड्रपुष्पं जपापुष्पं [16]वज्रपुष्पं तिलस्य यत् ।
[17]प्रातिहासशतप्रासचण्डातहयमारकाः ॥ ७६ ॥
करवीरे [18]करीरे तु क्रकरग्रन्थिलावुभौ ।

---

१ एके पीतपुष्पयूथिकायाः । २ पञ्च कुन्दभेदस्य । ३ त्रीणि जातेः ( चमेली ) ४ द्वे नवमालिकायाः । ५ द्वे कुन्दस्य । ६ त्रीणि दोपहरिया इति ख्यातस्य । ७ त्रीणि पीयुआर इति ख्यातस्य । ८ द्वे कटसरैय इति ख्यातस्य । ९ एकं रक्तवर्णविशिष्टस्य कटसरैयो यस्य । १० एकं पीतवर्णायाः । ११ त्रय नीलझिण्ट्याः । १२ द्वयं झिण्टी इति ख्यातस्य । १३ एकमरुणझिण्ट्याः । १४ द्वय पीतझिण्ट्याः । १५ द्वे अड़ोर इति ख्यातस्य । १६ एकं तिलपुष्पस्य । १७ पञ्चकं करवीरस्य ( कणेर ) । १८ त्रीणि करील इति ख्यातस्य ।

[1]उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ॥ ७७ ॥
मातुलो मदनश्चास्य फले [2]मातुलपुत्रकः।
[3]फलपूरो बीजपूरो रुचको मातुलुङ्गके ॥ ७८ ॥
[4]समीरणो मरुबकः प्रस्थपुष्पः फणिज्जकः।
जम्बीरोऽप्यथ [5]पर्णासे कठिञ्जरकुठेरकौ ॥ ७९ ॥
[6]सितेऽर्जकोऽत्र [7]पाठी तु चित्रको वह्निसंज्ञकः।
[8]अर्काह्ववसुकास्फोटगणरूपविकीरणाः ॥ ८० ॥
मन्दारश्चार्कपर्णोऽत्र [9]शुक्लेऽलर्कप्रतापसौ।
[10]शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ॥ ८१ ॥
[11]वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि।
[12]वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता ॥ ८२ ॥
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि।
[13]मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ॥ ८३ ॥

---

१ सप्तकं धत्तूरस्य। २ एकं धत्तूरफलस्य। ३ चत्वारि मातुलिङ्गस्य ( बिजोरा ) ४ पञ्च श्वेत मरुआ इति ख्यातस्य। ५ त्रीणि पर्णासस्य। ६ एकं श्वेतपर्णासस्य। ७ द्वयं चित्रकस्य ( चीता )। ८ सप्तकमर्कस्य। ९ द्वे शुक्लार्कस्य। १० पञ्च गुल्मस्य इति ख्यातस्य। ११ चत्वारि वृक्षोपरिजातलताविशेषस्य। १२ नव गुडुच इति ख्याताः। १३ पञ्चमुरहारा इति ख्यातस्य।

मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।
[1]पाठाऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ॥८४॥
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ।
[2]कटुः कटम्भराऽशोकरोहिणी कटुरोहिणी ॥ ८५ ॥
मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ।
[3]आत्मगुप्ताऽजहाऽव्यण्डा कण्डुरा प्रावृषायणी ॥८६॥
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ।
[4]चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ॥ ८७ ॥
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ।
[5]अपामार्गः शैखरिको धामार्गवमयूरकौ ॥ ८८ ॥
प्रत्यक्पर्णी केशपर्णी किणिही खरमञ्जरी ।
[6]हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥८९॥
अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः ।
[7]मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ॥९०॥
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ।

१ दश पेठा इति ख्यातायाः । २ अष्टौ कुटकी इति ख्यातायाः । ३ नव केडाय इति ख्यातायाः । ४ दश मूषिकपर्ण्याः । ५ अष्टकमपामार्गस्य । ६ नवकं भार्ग्याः । ७ नवकं मञ्जिष्ठायाः [ मजीठ ] ।

[१]यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ॥९१॥
रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ।
[२]पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका ॥९२॥
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ।
[३]निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ९३
प्रचोदनी कुलीक्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ।
[४]नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ९४
रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ।
अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ॥ ९५ ॥
कालमेषी कृष्णफला [५]बाकुची पूतिफल्यपि ।
[६]कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥
उषणा पिप्पली शौण्डी कोलाऽथ [७]करिपिप्पली ।
कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ॥ ९७ ॥
[८]चव्यं तु चविका [९]काकचिञ्चा गुञ्जा तु कृष्णला ।

---

१ दशकं यवासा इतिख्यातस्य । २ नवकं शिहुण्डायाः ( पिठवानी इत ) । ३ दशकं भटकटाइ इति ख्यातायाः । ४ एकादश नील्याः । ५ अष्टकं बकुची इति ख्यातायाः । ६ दशकं पिप्पल्याः । ७ पञ्च गजपिप्पल्याः । ८ द्वे चव्य चवक इति ख्यातस्य । ९ त्रीणि गुञ्जायाः ।

[1]पलङ्कषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ॥ ९८ ॥
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ।
[2]विश्वा विषा प्रतिविषाऽतिविषोपविषारुणा ॥ ९९ ॥
शृंगी महौषधं चाथ [3]क्षीरावी दुग्धिका समे ।
[4]शतमूली बहुसुताऽभीरुरिन्दीवरी वरी ॥ १०० ॥
ऋष्यप्रोक्ताऽभीरुपत्रीनारायण्यः शतावरी ।
अहेरुरथ [5]पीतद्रुकालीयकहरिद्रवः ॥ १०१ ॥
दार्वी पचम्पचा दारुहरिद्रा पर्जनीत्यपि ।
[6]वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥ १०२ ॥
शुक्ला [7]हैमवती [8]वैद्यमातृसिंह्यौ तु वाशिका ।
वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ॥ १०३ ॥
[9]आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता ।
इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ॥ १०४ ॥
[10][11]शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ।

---

१ छत्रदं गोखुरु इति ख्यातस्य । २ अटकमतिविषायाः । ३ क्षीरपुष्पीति ख्याताया: । ४ इदं शतमूल्याः [ शतावरी ] । ५ एतद्वयं दारुहल्दी इति ख्यातस्य । ६ पञ्चकं वचा, इति ख्याताया: । ७ एवं शुभ्रवचायाः । ८ सप्तकमटरूषस्य ( अडूसा ) । ९ चत्वारि विष्णुक्रान्तायाः । ( कोयल गोकर्णी ) १० पञ्च तालमखाना इति ख्यातस्य । ११ षट्कं मधुरिकायाः ( सौंफ ) इति ख्यातस्य ।

मिश्रेयाप्यथ [1]सीहुण्डो वज्रः स्नुक्स्त्री स्नुही गुडा॥१०५॥
समन्तदुग्धाऽथो [2]वेल्लममोघा चित्रतण्डुला ॥
तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम् ॥ १०६॥
[3]वला वाट्यालका [4]घण्टारवा तु शणपुष्पिका ।
[5]मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ॥१०७॥
[6]सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ॥
त्रिभण्डी रेचनी [7]श्यामापालिन्द्यौ तु सुषेणिका॥१०८॥
काला मसूरविदलाऽर्धचन्द्रा कालमेषिका ॥
[8]मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ॥ १०९ ॥
[9]विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री तु या सिता ॥
अन्या [10]क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका॥११०॥
[11]लाङ्गली शारदी तोयपिप्पली शकुलादनी ॥
[12]खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ॥१११॥

---

१ षट् वज्रद्रुमस्य [ सेहुड ]। २ षट्कं विडङ्गस्य [ वायुविडंग इति ख्यातस्य ] ३ द्वे धनमार इतिख्यातस्य। ४ द्वे शणपुष्पिकायाः [ घण्टा ]। ५ पञ्च द्राक्षायाः [ दाख मुनक्का ]। ६ सप्त त्रिवृतायाः [ तेवड़, श्वेतनिशोथ ] ७ सप्त कृष्णवर्णायास्त्रिवृतायाः। ८ चत्वारि यष्टिमधुकस्य [ जेठीमधु ] इति ख्यातस्य ९ चत्वारि शुक्लभूमिकूष्माण्डस्य। १० त्रीणि कूष्माण्डस्य। ११ चत्वारि शाकभेदस्य [ जलपिप्पली ] इति ख्यातायाः १२ पञ्चमयूरशिखायाः।

[1]गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ॥
[2]योग्यमृद्धिः सिद्धिलक्ष्मौ वृद्धेरप्याह्वया इमे ॥११२॥
[3]कदली वारणबुसा रम्भा मोचांशुमत्फला ॥
काष्ठीला [4]मुद्गपर्णी तु काकमुद्गा सहेत्यपि ११३
[5]वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी ॥
[6]नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ॥११४॥
नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा ॥
[7]विदारिगन्धांऽशुमती सालपर्णी स्थिरा ध्रुवा ॥११५॥
[8]तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च ॥
[9]भारद्वाजी तु सा वन्या [10]शृंगी तु ऋषभो वृषः ११६
[11]गांगेरुकी नागबला झषा ह्रस्वगवेधुका ॥
[12]धामार्गवो घोषकः [13]स्यान्महाजाली सपीतकः ११७

---

१ पञ्च उत्पलशारिवायाः । २ चत्वारि ऋद्धिनामकस्य ओषधिविशेषस्य । एतानि वृद्धयोषधेरपि । ३ षट् कदल्याः । ४ अयं मुगौनी इति ख्यातस्य । ५ पञ्च वार्ताक्याः [ भेटाकी ] । ६ नव रास्नायाः [ रासन् ] तुलसी इति ख्यातायाः । ७ पञ्च शालपर्ण्याः, सरिवन इति ख्यातस्य । ८ चत्वारि कार्पास्याः [ कपास ] । ९ एकं वन्यकार्पास्याः [ नर्मा ] । १० अयं बैलघाटी काकडाशीगी इतिख्यातस्य । ११ चत्वारि ओषधिविशेषस्य [ ककही ] । १२ द्वे घोषकस्याः [ श्वेततुरई ] इति ख्यातस्य, १३ एवं पीतपुष्पघोषकस्याः [ पीवा ] ।

[1]जोत्स्नी पटोलिका जाली [2]नादेयी भूमिजम्बुका ॥
[3]स्याल्लांगलिक्यग्निशिखा [4]काकांगी काकनासिका१८
[5]गोधापदी तु सुवहा [6]मुसली तालमूलिका ॥
[7]अजशृंगी विषाणी स्याद् [8]गोजिह्वादार्विके समे ११९
[9]ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ [10]द्विजा ॥
हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥१२०॥
[11]एलावालुकमैलेयं सुगन्धि हरिवालुकम् ॥
वालुकं चाथ [12]पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ।१२१।
[13]बालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ॥
[14]कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ॥ १२२ ॥
शैलेयं [15]तालपर्णी तु दैत्या गन्धकुटी मुरा ॥
गन्धिनी [16]गजभक्ष्या तु सुवहा सुरभी रसा ॥ १२३ ।

---

१ अयं पटोलिकायाः [ चिचिंडा इति ख्यातायाः । २ द्वे भूजम्ब्वाः। जामु इति ख्यातस्य ३ द्वे लाङ्गल्याः ( करिहारी )। ४ द्वे काकजंघायाः ( कौआठोडी ) ५ द्वे हंसपदिकायाः इति ख्यातायाः ६ द्वे मुसलीकन्दस्य ( मुसलीकन्दः )। ७ द्वे मेढाशृंगी इतिख्यातायाः । ८ द्वे गोभी इतिख्यातस्य । ९ त्रीणि नागवल्ल्याः पान इति ख्यातस्य । १० षट्कं रेणुकाख्यगन्धद्रव्यस्य । ११ पञ्च वालुकाख्यगन्धद्रव्यस्य। १२ चत्वारि पालक इत्यस्य। १३ षट्क नेत्रवाला इति ख्यातस्य। १४ पञ्च शैलेयस्य ( शिलाजित )। १५ पंच मुराख्यसुगन्धिद्रव्यस्य १६ चत्वारि कोष इति ख्यातस्य।

१गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ॥
२योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ॥११२॥
३कदली वारणबुसा रम्भा मोचांशुमत्फला ॥
काष्ठीला ४मुद्गपर्णी तु काकमुद्गा सहेत्यपि ॥११३॥
५वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी ॥
६नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ॥११४॥
नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा ॥
७विदारिगन्धांऽशुमती सालपर्णी स्थिरा ध्रुवा ॥११५॥
८तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च ॥
९भारद्वाजी तु सा वन्या १०शृंगी तु ऋषभो वृषः ॥११६॥
११गांगेरुकी नागबला झषा ह्रस्वगवेधुका ॥
१२धामार्गवो घोषकः १३स्यान्महाजाली सपीतकः ॥११७॥

---

१ पञ्च उत्पलशारिवायाः । २ चत्वारि ऋद्धिनामकस्य ओषधिविशेषस्य । एतानि वृद्ध्या ओषधेरपि । ३ षट् कदल्याः । ४ अयं मुगौनी इति ख्यातस्य । ५ पञ्च वार्ताक्याः [ भेटाकी ] । ६ नव रास्नायाः [ रासन ] तुलसी इति ख्यातायाः । ७ पञ्च शालपर्ण्याः सरिवन इति ख्यातस्य । ८ चत्वारि कार्पास्याः [ कपास ] । ९ एकं वन्याकार्पास्याः [ नर्मा ] । १० अयं बैलघाटी काकडाशींगी इतिख्यातस्य । ११ चत्वारि बलाविशेषस्य [ ककही ] । १२ द्वे घोषवल्ल्याः [ श्वेततुरई ] इति ख्यातस्य । १३ एकं पीतघोषवल्ल्याः [ घीया ] ।

[1]ज्योत्स्नी पटोलिका जाली [2]नादेयी भूमिजम्बुका ॥
[3]स्याल्लांगलिक्यग्निशिखा काकांगी काकनासिका ११८
[4]गोधापदी तु सुवहा [5]मुसली तालमूलिका ॥
[6]अजशृंगी विषाणी स्याद् [7]गोजिह्वादार्विके समे ११९
[8]ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ [10]द्विजा ॥
हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥ १२० ॥
[11]एलावालुकमैलेयं सुगन्धि हरिवालुकम् ॥
वालुकं चाथ [12]पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ॥१२१॥
[13]बालं ह्रीवेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ॥
[14]कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ॥ १२२ ॥
शैलेयं [15]तालपर्णी तु दैत्या गन्धकुटी मुरा ॥
गन्धिनी [16]गजभक्ष्या तु सुवहा सुरभी रसा ॥ १२३ ॥

---

१ त्रयं पटोलिकायाः [ चिचिंडा इति ख्यातायाः । २ द्वे भूजम्ब्वाः । जामुन इति ख्यातस्य ३ द्वे लाङ्गल्याः ( कलिहारी ) । ४ द्वे काकजंघायाः ( कौआठोंठी ) । ५ द्वे हंसपादिकायाः इति ख्यातायाः ६ द्वे मुसलकन्दस्य ( मुसलीकन्दः ) । ७ द्वे मेढासिंगी इतिख्यातायाः । ८ द्वे गोभी इतिख्यातस्य । ९ त्रीणि नागवल्ल्याः पान इति ख्यातस्य । १० पटूक रेणुकाख्यगन्धद्रव्यस्य । ११ षट् वालुकाख्यगन्धद्रव्यस्य । १२ चत्वारि पालक इत्यस्य । १३ पञ्च नेत्रवाला इति ख्यातस्य । १४ षट् शैलेयस्य ( शिलाजित ) । १५ पंच मुराख्यसुगन्धिद्रव्यस्य । १६ चत्वारि कांच इति ख्यातस्य ।

ऐन्द्रवारुणी कुन्दुरुकी सल्लकी ह्लादिनीति च ॥
[1]अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका ॥१२४॥
[2]पृथ्वीका चन्द्रबालैला निष्कुटिर्बहुलाऽथ सा ॥
[3]सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः ॥१२५॥
[4]व्याधिः कुष्ठं पारिभाव्यं वाप्यं पाकलमुत्पलम् ॥
[5]शङ्खिनी चोरपुष्पी स्यात्केशिन्यथ [6]वितुन्नकः ॥१२६॥
झटामलाऽज्झटा ताली शिवा तामलकीति च ॥
[7]प्रपौण्डरीकं पौण्डर्यमथ [8]तुन्नः कुबेरकः ॥१२७॥
कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ [9]राक्षसी ॥
चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः ॥ १२८ ॥
[10]व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ॥
[11]सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ॥१२९॥
धमन्यञ्जनकेशी च [12]हनुर्हट्टविलासिनी ॥

---

१ चत्वारि धातक्याः ( धावा ) २ पञ्च एलवालुकायाः [ इलायची ] । ३ पञ्च सूक्ष्मैलायाः । ४ षट् कुठ इतिख्यातस्य । ५ त्रयं चोरपुष्प्याः ( शंखाहुली ) । ६ षट् भूम्यामलक्याः । ७ द्वे पौण्डर्यस्य ( पुंडरीया ) । ८ षट् नन्दिवृक्षस्य ( तूणी ) । ९ षट् कोशातकगन्धद्रव्यस्य । १० चत्वारि व्याघ्रनखनामकगन्धद्रव्यस्य । ११ सप्त नलीनामकगन्धद्रव्यस्य १२ सप्त नखाह्वगन्धद्रव्यस्य ।

शुक्तिः शङ्खः खुरः कोलदलं [1]नखमथाढकी ॥ १३० ॥
काक्षी मृत्स्ना सुवरिका मृत्तालकसुराष्ट्रजे ॥
[2]कुटन्नटं दाशपुरं वानेयं परिपेलवम् ॥ १३१ ॥
प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ॥
[3]ग्रन्थिपर्णं शुकं बर्हं पुष्पं स्थौणेयकुक्कुरे ॥ १३१ ॥
[4]मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ॥
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ॥ १३२ ॥
[5]तपस्विनी जटामांसी जटिला लोमशा मिशी ॥
[6]त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ॥ १३४ ॥
[7]कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ॥
[8]ओषध्यो जातिमात्रे स्युरजातौ [9]सर्वमौषधम् ॥१३५॥
[10]शाकाख्यं पत्रपुष्पादि [11]तण्डुलीयोऽल्पमारिषः ॥

---

१ षट् तुवरिकायाः अरहर इति ख्यातस्य [ तुवार ]। २ अष्टकं मोथा इतिख्यातस्य। ३ पञ्च कुकुरौंदा इतिख्यातस्य। ४ द्वयं असरक इतिख्यातयोः। ५ पञ्च जटामांस्याः ( जटामासी )। ६ षट् त्वक्पत्रस्य तज इतिख्यातस्य [ दालचिनीतज ] ७ चत्वारि कपूर इतिख्यातस्य। ८ एकं फलशाकान्तजातः। ९ एकं रोगहार्योषधेः। १० एकं भोजनशाकस्य। उक्तं च "मूलपत्रकरीराग्रफलकाण्डाधिरूढकम्। त्वक् पुष्पं कवकं चैव शाकं दशविधं स्मृतम्" इति। ११ द्वे चवराई इतिख्यातस्य।

१विशल्याग्निशिखानन्ता फलिनी शक्रपुष्पिका ॥१३६॥
२स्यादृक्षगन्धा छगलान्त्र्यावेगी वृद्धदारकः ॥
जङ्गो ३ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ॥१३७॥
४पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ॥
५हयपुच्छी तु काम्बोजी माषपर्णी महासहा ॥१३८॥
६तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ॥
७बर्बरा कबरी तुङ्गी खरपुष्पाऽजगन्धिका ॥ १३९ ॥
८एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ॥
९चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ॥१४०॥
१०सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ॥
११नमस्कारी गण्डकारी समङ्गा खदिरेत्यपि ॥१४१॥
१२जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ॥

---

१ पञ्चाग्निशिखायाः ( इंद्रपुष्पी ) इत्याख्यातायाः । २ पञ्च वृद्धदारकस्य विधारा इतिख्यातस्य । ३ चत्वारि सोमलतायाः (ब्राह्मी) । ४ चत्वारि स्वर्णक्षीर्याः (मकोय) ५ चत्वारि माषपर्ण्याः भंग इतिख्यातस्य । ६ चत्वारि विम्बिकायाः [ कुन्दुरु ] । ७ पञ्च बर्बरायाः ( कालमाली ) । ८ चत्वारि एलापर्ण्याः । ९ पञ्चाम्ललोणिकायाः ( लोनिआ ) १० चतुष्कमम्लवेतसस्य । अमलवेत इतिख्यातस्य ११ चत्वारि हार्ता मोडी वा कस्मात् इति ख्यातस्य । १२ पञ्च जीवन्त्याः । गुर्जर देश डोडी इत्य ख्यातस्य ।

[1]कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ॥ १४२ ॥
[2]किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ [3]सप्तला ॥
विमला शातला भूरिफेना चर्मकषेत्यपि ॥ १४३ ॥
[4]वायसोली स्वादुरसा वयस्थाऽथ [5]मकूलकः ॥
निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ॥ १४४ ॥
[6]अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ॥
मूले [7]पुष्करकाश्मीरपद्मपत्राणि पौष्करे ॥ १४५ ॥
[8]अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी ॥
[9]काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ॥१४६॥
[10]प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ॥
पद्माट उरणाख्यश्च [11]पलाण्डुस्तु सुकन्दकः ॥१४७॥
[12]लतार्कदुद्रुमौ तत्र हरितेऽथ [12]महौषधम् ॥
लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ १४८ ॥

१ पञ्च जीवकस्य। २ त्रयं चिरायता इति ख्यातस्य। ३ पञ्च सप्तलायाः (शिकेकाई)। ४ त्रयं काकोल्याः (ककोडी)। ५ पञ्च वृषदन्त्याः दंतिया इति-ख्यातस्य। ६ चत्वारि यवान्याः (अजमोदा) अजवायन इत्याख्यातस्य। त्रीणि पुष्कर मूलस्य। ८ पञ्च स्थलकमलिन्याः पोहकरमूल इत्याख्यातस्य। ९ पञ्च रोचन्याः (कबीला)। १० षट्कं पुमाड इति ख्यातस्य। ११ द्वे पलाण्डोः (प्याज)। १२ द्वे हरितपलाण्डोः। १२ षट्कं लशुनस्य।

[1]पुनर्नवा तु शोथघ्नी [2]वितुन्नं सुनिषण्णकम् ॥
[3]स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि ॥१४८॥
[4]पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ॥
[5]वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ॥१५०॥
[6]विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि ॥
[7]मार्कवो भृङ्गराजः [8]स्यात्काकमाची तु वायसी ॥१५१॥
[9]शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः ॥
अवाक्पुष्पी कारवी च [10]सरणा तु प्रसारिणी ॥१५२॥
तस्यां कटम्भरा राजबला भद्रबलेत्यपि ॥
[11]जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥ १५३ ॥
संस्पर्शाऽथ [12]शटी गन्धमूला षड्ग्रन्थिकेत्यपि ॥
कर्चूरोऽपि पलाशोऽथ [13]कारवेल्लः कठिल्लकः ॥१५४॥

---

१ द्वे पुनर्नवायाः (गदहपूना)। २ द्वे सिरसोपरिआ इति ख्यातस्य। ३ चत्वारि शणपर्ण्याः (पटशण)। ४ पञ्च ज्योतिष्मत्याः (मालकांगणी) ५ चतुष्कं त्रायमाणायाः। ६ चतुष्कं वाराह्याः [वाराहीकन्द] ७ द्वे भृङ्गराज इति ख्यातस्य। ८ द्वे काकमाच्याः (काकप्रियाः)। ९ षट् सौर इति ख्यातस्य। १० पञ्च प्रसारिण्याः (कुब्जप्रसारिणी)। ११ षट् चक्रवर्तिन्याः (चकवत) १२ पञ्च (शट्याः कपूरकाचरी)। १३ त्रीणि कारवेल्लस्य (करेला)

सुपवी चाथ [1]कुलकं पटोलस्तिक्तकः पटुः ॥
[2]कूष्माण्डकस्तु [3]कर्कारु रुर्वारुः कर्कटी स्त्रियौ ॥१५५॥
[4]इक्ष्वाकुः कटुतुम्बी [5]स्यात्तुम्ब्यलाबूरुभे समे ॥
[6]चित्रा गवाक्षी गोडुम्बा [7]विशाला त्विन्द्रवारुणी ॥१५६॥
[8]अर्शोघ्नः सूरणः कन्दो [9]गण्डीरस्तु समष्ठिला ॥
[10]कलम्ब्युः [11]पोदिकास्त्रीतु [12]मूलकं [13]हिलमोचिका ॥१५७॥
[14]वास्तुकं शाकभेदाः [15]स्युर्दूर्वा तु शतपर्विका ॥
सहस्रवीर्याभार्गव्यौ रुहाऽनंताऽथ सा सिता ॥१५८॥
[16]गोलोमी शतवीर्या च गण्डाली शकुलाक्षका ॥
[17]कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ॥१५९॥
[18]स्याद्भद्रमुस्तको गुन्द्रा [19]चूडाला चक्रलोच्चटा ॥
[20]वंशे त्वक्सारकर्मारत्वचिसार तृणध्वजाः ॥ १६० ॥

---

१ चत्वारि पटोलस्य [ परोरा ] । २ द्वे कूष्माण्डस्य [ कोंहडा ]। ३ द्वे कर्कट्याः [ ककड़ी ] । ४ द्वे कटुतुम्ब्याः । ५ द्वे तुम्बा इति ख्यातस्य । ६ त्रीणि गोडुम्बायाः [ ककड़ीविशेषः ]। ७ द्वे इन्द्रवारुण्याः [ इन्द्रवारुणी ]। ८ त्रीणि सूरणस्य जमीकन्द इतिख्यातस्य । ९ द्वे गण्डीराख्यस्य [ गांडरदूवी ]। १० करेमु । ११ पोई इति । १२ मुरैयी इतिख्यातस्य । १३ हिलमाल इतिख्यातस्य १५ वास्तुकं एकमथुआ इति ख्यातस्य १४ षट् दूर्वायाः । १५ चत्वारि श्वेतदूर्वायाः । १६ चत्वारि मुस्तायाः [ मोथा ] । १७ द्वे नागरमोथा इति ख्यातस्य । १८ त्रीणि उच्चटामूलस्य [ मुस्ताविशेष ]। १९ दशकं वंशोः [ बाँस ]।

शतपर्वा यवफलो वेणुमस्करतेजनाः ॥
वेणवः [१]कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ॥१६१॥
[२]ग्रन्थिर्ना पर्वपरुषी [३]गुन्द्रस्तेजनकः शरः ॥
[४]नडस्तु धमनः पोटगलोऽथो [५]काशमस्त्रियाम् ॥१६२॥
इक्षुगन्धा पोटगलः पुंसि भूम्नि [६]तु बल्वजाः ॥
[७]रसाल इक्षुस्तद्भेदाः [८]पुण्ड्रकान्तारकादयः ॥ १६३ ॥
[९]स्याद्वीरणं वीरतरं [१०]मूलेऽस्योशीरमस्त्रियाम् ॥
अभयं नलदं सेव्यममृणालं जलाशयम् ॥ १६४ ॥
लामज्जकं लघुलयमवदाहेष्टकापथे ॥
[११]नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६५ ॥
अस्त्री [१२]कुशं कुथो दर्भः पवित्रमथ [१३]कत्तृणम् ॥
पौरसौगन्धिकध्याम देवजग्धकरौहिषम् ॥ १६६ ॥

---

१ एकं कीचकादिरन्ध्रगतवायुशब्दवतां वेणूनाम् कीचक इत्याख्यातस्य । २ त्रीणि वंशादिपर्वे । ३ त्रीणि शरस्य [ सरकी ] । ४ त्रीणि नलखड़ इति ख्यातस्य । ५ त्रीणि काशस्य । ६ एकं बगई इतिख्यातस्य । ७ द्वे इक्षोः [ ऊख ] । ८ एते इक्षोर्भेदाः यथा "इक्षुः कर्कटको वंशः कान्तारो वेणुनिःसृतः । इक्षुरसः पौण्ड्रकश्च रसालः शुकनाशकः" इति । ९ द्वे तृणभेदस्य [ गांडर ] । १० दश उशीरमूलस्य । ११ एते सर्वे तृणविशेषाः । १२ चत्वारि कुशस्य । १३ षट् रोहिताख्यतृणविशेषस्य ।

[1]छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे ॥
शष्पं बालतृणं [3]घासो यवसं [4]तृणमर्जुनम् ॥१६७॥
तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ॥
[5]तृणराजाह्वयस्तालो [6]नालिकेरस्तु लाङ्गली ॥१६८॥
[7]घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु ॥
[8]फलमुद्वेगमेते च हिन्तालसहितास्त्रयः ॥ १६९ ॥
[9]खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ॥

इति वनौषधिवर्गः ॥ ४ ॥

[10]सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ॥
( [11]कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः
पुण्डरीकः पञ्चनखश्चित्रकायमृगद्विषः ॥ १ )
[12]शार्दूलद्वीपिनौ व्याघ्रे [13]तरक्षुस्तु मृगादनः ॥ १ ॥
[14]वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ॥

---

१ पञ्च छत्राभिधतृणस्य । २ द्वे बालतृणस्य । ३ द्वे गवादीनां भक्ष्यतृणस्य । ४ द्वे तृणमात्रस्य । एवं तृणसमूहस्य । ५ एवं नडसमूहस्य । ६ द्वे तालस्य । ७ द्वे नालिकेरस्य । ८ पञ्च पूगवृक्षस्य ( सुपारी ) . ९ एवं पूगफलस्य । १० एते हिन्तालसहिताः [illegible] तृणद्रुमाः । ११ [illegible] । १२ [illegible] १३ सिंहस्य । १३ [illegible] । १४ [illegible] । १५ [illegible]

दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥
[1]कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः ॥
मर्कटो वानरः कीशो वनौका अथ [2]भल्लुके ॥ ३ ॥
ऋक्षाऽच्छभल्लभल्लूका [3]गण्डके खड्गखड्गिनौ ॥
[4]लुलायो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥
स्त्रियां [5]शिवा भूरिमायगोमायुमृगधूर्तकाः ॥
शृगालवञ्चुकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥
[6]ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् ॥
त्रयो [7]गौधेर गौधार गौधेया गोधिकात्मजे ॥ ६ ॥
[8]श्वावित्तु शल्यस्तल्लोम्नि [9]शलली शललं शलम् ।
[10]वातप्रमीर्वातमृगः [11]कोकस्त्वीहामृगो वृकः ॥ ७ ॥
[12]मृगे कुरङ्गवातायुहरिणाजिनयोनयः ॥
[13]ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे [14]त्रिषु ॥ ८ ॥

---

१ नवकं वानरस्य । २ चतुष्टयं भालू इतिख्यातस्य । ३ त्रीणि गैंडा इति ख्यातस्य । ४ पञ्च महिषस्य ( भैंसा ) । ५ दश जम्बुकस्य शृगाल इति ख्यातस्य । ६ पञ्च मार्जारस्य । ७ त्रीणि कृष्णसर्पाद्गोधायां जातचतुष्पदस्य । ८ द्वे शल्यस्य । ९ त्रीणि शल्यलोम्नि । १० द्वे वातमृगस्य । ११ त्रीणि वृकस्य । १२ पञ्च हरिणस्य । १३ एणं हरिण्याश्चर्मादेः । १४ एवं हरिणस्य चर्मादेः ।

[1]कदली कन्दली चीनश्चमूरुप्रियकावपि ॥
समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥
कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ॥
गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥
[3]गन्धर्वः शरभो रामः सृमरो गवयः शशः ॥
इत्यादयो मृगेन्द्राद्याः गवाद्याः [4]पशुजातयः ॥
( [5]अधोगन्ता तु खनको वृकः पुंध्वज उन्दुरः )
[6]उन्दुरुर्मूषकोऽप्याखुर्गिरिका [7]बालमूषिका ॥
[8]सरटः कृकलासः [9]स्यान्मुसली गृहगोधिका ॥ १२ ॥
[10]लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः ॥
[11]नीलङ्गुस्तु कृमिः [12]कर्णजलौकाः शतपद्युभे ॥१३॥
[13]वृश्चिकः शूककीटः [14]स्यादलिद्रोणौ तु वृश्चिके ॥

१ एते षट् हरिणभेदाः । २ एते द्वादश मृगभेदाः । ३ एते मृगभेदाः । ४ एतावत्कालपर्यन्तोक्ता सर्वे सिंहादयः पशुजातयः । ५ पञ्चवेरकस्योक्तनामानि मूषकस्य । ६ नवं मूषकस्य । ७ द्वे स्वल्पमूषकजातेः । ८ द्वे गिरगिटा इति ख्यातस्य । ९ द्वे गृहगोधायाः { बिछुतिया } १० चत्वारि ऊर्णनाभस्य ( मकड़ा ) । ११ द्वे कृमे इति ख्यातस्य । १२ द्वे कर्णजलौकायाः । ( गोजर ) १३ द्वे शूककीटस्य { कर्णादिमलज कृमिविशेषः ) १४ त्रीणि वृश्चिकस्य ( बिछू ) ।

१पारावतः कलरवः कपोतोऽथ २शशादनः ॥ १४
पत्री श्येन ३उलूकस्तु वायसारातिपेचकौ ॥
( ४दिवान्धः कौशिको घूको दिवाभीतो निशाटनः
५व्याघ्राटः स्याद्भरद्वाजः ६खञ्जरीटस्तु खञ्जनः ॥१५
७लोहपृष्ठस्तु कङ्कः स्यादथ ८चाषः किकीदिविः ॥
९कलिङ्गभृङ्गधूम्याटा अथ १०स्याच्छतपत्रकः ॥ १६ ।
दार्वाघाटोऽथ ११सारङ्गस्तोककश्चातकः समाः ॥
१२कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥
१३चटकः कलविङ्कः स्यात्तस्य स्त्री १४चटका तयोः ॥
पुमपत्ये १५चाटकैरः स्त्र्यपत्ये चटकैव सा ॥ १८ ॥
१६कर्करेटुः करेटुः १७स्यात्कृकणक्रकरौ समौ ॥

---

१ त्रीणि पारावतस्य। २ अयं बाज इति ख्यातस्य। ३ त्रयमुलूकस्य। ४ पञ्च कम'पुन्द्रस्य भरद्वाज इति ख्यातस्य। ५ द्वे भरद्वाजस्य ( भद्दूल )। ६ द्वे खञ्जनस्य ( खञ्जरीट )। ७ द्वे कङ्कपक्षिणः ( ककहरा )। ८ द्वे चाप इति ख्यातस्य। ९ त्रीणि भरतचूडइतिख्यातस्य। १० द्वे सुतारपक्षी काठकोरा इति ख्यातस्य। ११ त्रीणि चातकस्य। १२ चत्वारि कुक्कुटस्य। १३ द्वे चटकस्य ( चिमणी )। १४ एकं चटकस्त्रियाः। १५ एकं चटकाचटकयोः पुमपत्ये। स्त्र्यपत्ये चटकैव। १६ द्वे करटोक इति ख्यातस्य। १७ द्वे करेटुभेदस्य।

[1]वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ १९ ॥
[2]काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ॥
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २० ॥
[3]( स एव च चिरञ्जीवी चैकदृष्टिश्च मौकुलिः )
[4]द्रोणकाकस्तु काकोलो [5]दात्यूहः कालकण्ठकः ॥
[6]आतापिचिल्लौ [7]दाक्षाय्यगृध्रौ [8]कीरशुकौ समौ ॥२१॥
[9]क्रुङ् क्रौञ्चोऽथ [10]बकः कह्वः [11]पुष्कराह्वस्तु सारसः ॥
[12]कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २२ ॥
[13]कादम्बः कलहंसः [14]स्यादुत्क्रोशकुररौ समौ ॥
[15]हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥
[16]राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ॥
[17]मलिनैर्मल्लिकाक्षास्ते [18]धार्तराष्ट्राः सितेतरैः ॥२४॥

---

१ चत्वारि कोकिलस्य । २ दश काकस्य । ३ एतान्यपि त्रीणि काकस्य । ४ द्वे द्रोणकाक इतिख्यातस्य । ५ द्वे कृष्णचञ्चक इतिख्यातस्य । ६ द्वे चिल्लस्य [चील] । ७ द्वे गृध्रस्य । ८ द्वे कीरस्य [शुक] । ९ द्वे क्रौञ्च कराकुल इत्यस्य तस्य । १० द्वे बकस्य बगला इत्यख्यातस्य । ११ सारसस्य । १२ चत्वारि चक्रवाकस्य । १३ द्वे कलहंसस्य ( बतक ) । १४ द्वे कुररस्य । १५ चत्वारि हंसस्य । १६ एवं राजहंसानाम् । एवं मल्लिकाक्षाणाम् । १८ एवं धार्तराष्ट्राणाम् ।

¹शरारि राटिराडिश्च ²बलाका बिसकण्ठिका ॥
हंसस्य ³योषिद्वरटा सारसस्य तु ⁴लक्ष्मणा ॥२५॥
⁵जतुकाऽजिनपत्रा ⁶स्यात्परोष्णी तैलपायिका ॥
⁷वर्वणा मक्षिका नीला ⁸सरघा मधुमक्षिका ॥ २६
⁹पतङ्गिका पुत्तिका १०स्याद्दंशस्तु वनमक्षिका ॥
दंशी ११तज्जातिरल्पा १२स्याद्गन्धोली वरटाद्वयोः ॥२७॥
१३भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः ॥
समौ १४पतङ्गशलभौ खद्योतो १५ज्योतिरिङ्गणः ॥ २८ ॥
१६मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ॥
द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥
१७मयूरो बर्हिणो बर्हो नीलकण्ठो भुजङ्गभुक् ॥
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥३०॥

---

१ त्रयं आडीति ख्यातस्य । २ द्वे बगुला इति ख्यातस्य । ३ एकं हंस्याः । ४ एकं सारसस्त्रियाः । ५ द्वे चामचिरकी चिमगादर इतिख्य तस्य । ६ द्वे पक्षयुक्कीटविशेषस्य चमरीइत्याख्यातायाः । ७ त्रयं मक्षिकायाः । ८ द्वे मधुमक्षिकाभेदस्य । ९ द्वे क्षुद्रमधुमक्षिकाभेदस्य । १० द्वे वनमाछी डाशइतिख्य तस्य । ११ एकं क्षुद्रदंश इतिख्यातस्य । १२ द्वे वरट गन्धोली इत्याख्यातायाः इतिख्यातस्य । १३ चत्वारि झिल्लिस्या [ झिंगुर ] । १४ द्वे दीपादिषु समागच्छतः पतङ्गस्य । १५ द्वे खद्योतस्य जुगनू कीटविशेषस्य १६ एकादश भ्रमरस्य । १७ नव मयूरस्य ।

[1]केका वाणी मयूरस्य समौ [2]चन्द्रकमेचकौ ॥
[3]शिखा चूडा [4]शिखण्डस्तु पिच्छबर्हे नपुंसके ॥३१॥
[5]खगे विहङ्गविहगविहङ्गमविहायसः ॥
शकुन्ति पक्षि शकुनि शकुन्तशकुन द्विजाः ॥ ३२ ॥
पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः ॥
नगौको वाजिविकिर विविष्किरपतत्रयः ॥ ३३ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसङ्गमाः ॥
तेषां विशेषा [6]हारीतो मद्गुः कारण्डवः प्लवः ॥३४॥
तित्तिरिः कुक्कुभो लावो जीवञ्जीवश्चकोरकः ॥
कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥ ३५ ॥
[7]गरुत्पक्षच्छदाः पत्रं पतत्रञ्च तनूरुहम् ॥
स्त्री [8]पक्षतिः पक्षमूलं [9]चञ्चुस्त्रोटिरुभे स्त्रियौ ॥३६॥
[10]प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः ॥
[11]पेशी कोशो द्विहीनेऽण्डं [12]कुलायो नीडमस्त्रियाम् ॥

---

१ एकं मयूरवाण्याः मयूर इक इति ख्यातम् । २ द्वे पिच्छस्य नेत्राकारचिह्नस्य । ३ द्वे मयूरशिखायाः । ४ त्रीणि मयूरपिच्छस्य । ५ षड्विंशतिः पक्षिसामान्यस्य । ६ एकैकं पक्षिभेदस्य । ७ षट् पक्षीणां पक्षस्य । ८ एकं पक्षमूलस्य । ९ द्वे पक्षिमुखस्य । १० एतास्तिस्रः खगानां गतिक्रियाः । ११ अण्डमण्डलस्य । १२ द्वे पक्षिगृहस्य [ खोता ] ।

[1]पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ॥
[2]स्त्रीपुंसौ मिथुनं द्वन्द्वं [3]युग्मं तु युगलं युगम् ॥३८॥
[4]समूहो निवहव्यूह संदोहविसर व्रजाः ॥
स्तोमौघ निकरव्रात वारसंघातसंचयाः ॥ ३९ ॥
समुदायः समुदयः समवायश्च यो गणः ॥
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४० ॥
वृन्दभेदाः [5]समैर्वर्गः [6]सङ्घसार्थौ तु जन्तुभिः ॥
सजातीयैः [7]कुलं [8]यूथं तिरश्चां पुंनपुंसकम् ॥४१॥
पशूनां [9]समजोऽन्येषां [10]समाजोऽथ सधर्मिणां ॥
[11]स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥४२॥
[12]कापोतशौकमायूरतैत्तिरादीनि तद्गणे ॥
गृहासक्ताः [13]पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥४३॥
इति सिंहादिवर्गः ॥ ५ ॥

[1]मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ॥
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥
[2]स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ॥
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
[3]विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ॥
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥
सुन्दरी रमणी रामा [4]कोपना सैव भामिनी ॥
[5]वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥
[6]कृताभिषेका महिषी [7]भोगिन्योऽन्या नृपस्त्रियः ॥
[8]पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥
भार्या जायाथ पुम्भूम्नि दाराः स्यात्तु [9]कुटुम्बिनी ॥
पुरन्ध्री [10]सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥
[11]कृतसापत्निकाध्यूढाधिविन्नाथ [12]स्वयंवरा ॥

---

१ एकादश मनुष्याणाम्। २ एकादश स्त्रियाः। ३ रामान्तमेवं स्त्रीणां विशेषभेदाः ४ द्वे कोपशीलायाः। ५ चत्वारि गुणैरुत्कृष्टायाः। ६ एकं कृताभिषेकायाः। ७ एकं नृपस्त्रीणाम्। ८ षट् परिणीतायाः स्त्रियाः। ९ द्वे पतिपुत्रादियुक्तायाः। १० चत्वारि पतिसेवातत्परायाः। ११ त्रीणि कृतानेकविवाहस्य पुरुषस्य प्रथमोढायाः। १२ त्रीणि स्वेच्छया पतिवरणोद्युक्तायाः।

[1]पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ॥
[2]स्त्रीपुंसौ मिथुनं द्वन्द्वं [3]युग्मं तु युगलं युगम् ॥३८॥
[4]समूहो निवहव्यूह संदोहविसर व्रजाः ॥
स्तोमौघ निकरव्रात वारसङ्घातसंचयाः ॥ ३९ ॥
समुदायः समुदयः समवायश्च यो गणाः ॥
स्त्रिया तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४० ॥
वृन्दभेदाः [5]समैर्वर्गः [6]सङ्घसार्थौ तु जन्तुभिः ॥
सजातीयैः [7]कुलं [8]यूथं तिरश्चां पुंनपुंसकम् ॥४१॥
पशूनां [9]समजोऽन्येषां [10]समाजोऽथ सधर्मिणां ॥
[11]स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥४२॥
[12]कापोतशौकमायूरतैत्तिरादीनि तद्गणे ॥
गृहासक्ताः [13]पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥४३॥

इति सिंहादिवर्गः ॥ ५ ॥

---

१ सप्त बालस्य पक्षि शिशोरित्यादिदशातस्य । २ द्वे स्त्रीपुंसयुग्मस्य । ४ द्वाविंशतिः समुदायस्य समूहस्याख्यातस्य । ५ एकं सजातीयप्राण्यप्राणिसमूहस्य । ६ द्वे प्राणिसमूहस्य । ७ एकं सजातीयजन्तुसमूहस्य । ८ एकं सजातीयतिरश्चां समूहस्य । ९ एकं पशुसमूहस्य । १० एकं पशुभिन्नानां द्वन्द्वस्य । ११ चत्वारि धान्यादिराशेः । १२ प्रत्येकं तत्तत्समूहस्य । १३ द्वे गृहासक्तपक्षिमृगाणाम् । । --

[1]मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ॥
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥
[2]स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ॥
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
[3]विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ॥
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥
सुन्दरी रमणी रामा [4] कोपना सैव भामिनी ॥
[5]वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥
[6]कृताभिषेका महिषी [7]भोगिन्योऽन्यानृपस्त्रियः ॥
[8]पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥
[9]भार्या जायाथ पुम्भूम्नि दाराः स्यात्तु [10]कुटुम्बिनी ॥
पुरन्ध्री [11]सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥
[12]कृतसापत्निकाध्यूढाधिविन्नाथ [13]स्वयम्वरा ॥

---

१ एकादश मनुष्याणाम्। २ एकादश स्त्रियः। ३ सामान्यतः स्त्रीणां विशेषभेदाः ४ द्वे कोपनशीलायाः। ५ चत्वारि गुणैरुत्कृष्टायाः। ६ एकं कृताभिषेकायाः। ७ एकं नृपस्त्रीणाम्। ८ षट् परिणीतायाः स्त्रियाः। ९ द्वे पतिपुत्रादियुक्तायाः। १० चत्वारि पतिव्रतास्त्रियाः। ११ स्त्री च कृतानेकविवाहस्य पुरुषस्य प्रथमोढायाः। १२ स्वेच्छया पतिवरणोद्युक्तायाः।

पतिम्वरा च वर्याथ [1]कुलस्त्री कुलपालिका ॥ ७ ॥
[2]कन्या कुमारी [3]गौरी तु नग्निकाऽनागतार्तवा ॥
[4]स्यान्मध्यमा दृष्टरजा [5]स्तरुणी युवतिः समे ॥ ८ ॥
समाः [6]स्नुषाजनीवध्व [7]श्चिरिण्टी तु सुवासिनी ॥
[8]इच्छावती कामुका स्याद् [9]वृषस्यन्ती तु कामुकी ॥९॥
कान्तार्थिनी तु या याति सङ्केतं [10]साऽभिसारिका ॥
[11]पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांशुला च [12]स्यादशिश्वी शिशुना विना ॥
[13]अवीरा निष्पतिसुता [14]विश्वस्ताविधवे समे ॥ ११ ॥
[15]आलिः सखी वयस्याऽथ [16]पतिवत्नी सभर्तृका ॥
[17]वृद्धा पलिक्नी [18]प्राज्ञी तु प्रज्ञा [19]प्राज्ञा तु धीमती ॥ १२ ॥

---

१ द्वे कुलस्त्रियाः । २ द्वे कन्यायाः । ३ त्रयं नष्टरजस्काया अरजा । ४ द्वे प्रथमप्राप्तरजोयोगायाः ५ द्वे मध्यमवयसि वर्तमानायाः । ६ त्रयं पुत्रादिभार्यायाः । ७ द्वे किंचिज्ज्येष्ठवयनाया । ८ द्वे मत्तादीच्छावत्याः । ९ द्वे अश्ववत् मैथुनेच्छावत्याः १० एकं अभिसारिकायाः । ११ अष्टौ स्वैरिण्याः । १२ एकं पुत्ररहितायाः । १३ एकं पतिपुत्ररहितायाः । १४ द्वे विधवायाः । १५ त्रयं सख्यायाः । १६ द्वे जीवद्भर्तृकायाः १७ द्वे पक्वकेशाः । १८ द्वे किंचिज्ज्ञायाः । १९ द्वे बुद्धिमत्याः ।

शूद्री [1]शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च ।
आभीरी [2]तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥
आर्याणी[3] स्वयमर्या स्यात्क्षत्रिया[4] क्षत्रियाण्यपि ।
उपाध्यायाप्युपाध्यायी[5] स्यादाचार्यापि च स्वतः ॥१४॥
आचार्यानी[6] तु पुंयोगे स्यादर्यी क्षत्रियी तथा ।
उपाध्यायान्युपाध्यायी[7] पोटा[8] स्त्रीपुंसलक्षणा ॥ १५ ॥
वीरपत्नी[9] वीरभार्या वीरमाता[10] तु वीरसूः ।
जातापत्या[11] प्रजाता च प्रसूता च प्रसूतिका ॥१६॥
स्त्री नग्निका[12]कोटवीस्याद्दूती संचारिके[13] समे ।
कात्यायन्यर्धवृद्धा[14] या काषायवसनाऽधवा ॥ १७ ॥
सैरन्ध्री[15] परवेश्मस्था स्ववशा शिल्पकारिका ।
असिक्नी स्या[16]दवृद्धा या प्रेष्याऽन्तः पुरचारिणी॥१८॥

---

१ एकं शूद्रस्त्रियाः शूद्रेति तज्जातेः । २ द्वे गोपालिकायाः अहिरिन इत्याख्या तायाः । ३ द्वे वैश्यभार्यायाः बनेनीइत्याख्यातायाः । ४ द्वे क्षत्रियभार्यायाः । ५ द्वे स्वयमध्यापिकायाः । ६ एकमाचार्यस्य स्त्रियाः । ७ द्वे उपाध्यायस्य भार्यायाः । ८ एकास्तन श्मश्रु रूपण स्त्रीपुंसचिन्हेन युक्तायाः । ९ द्वे वीरभार्यायाः । १० द्वे वीर मातुः । ११ चत्वारि प्रसूतायाः । १२ एकं नग्नस्त्रियाः । १३ द्वे दूतिकायाः १४ एकमर्धवृद्धेत्यादिद्विविशेषणत्रयविशिष्टायाः । १५ एकं परगृहस्थित्वादिप्रसाधन-कारिण्याः । १६ एकमवृद्धेति विशेषणत्रयोपेतायाः ।

वारस्त्री गणिका [1]वेश्या रूपाजीवाऽथ सा जनैः ।
सत्कृता [2]वारमुख्या [3]स्यात्कुट्टनी शम्भली समे ॥१९॥
[4]विप्रश्निका त्वीक्षणिका दैवज्ञाऽथ [5]रजस्वला ।
स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि [6]स्याद्रजः पुष्पमार्तवम् ।
[7]श्रद्धालुर्दोहदवती [8]निष्कला विगतार्तवा ॥ २१ ॥
[9]आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी ।
गणिकादेस्तु [10]गाणिक्यं गार्भिणं यौवतं गणे ॥२२॥
[11]पुनर्भूर्दिधिषूरूढा द्विस्तस्या [12]दिधिषुः पतिः ।
स तु द्विजोऽग्रेदिधिषुः सैव यस्य कुटुम्बिनी ॥ २३ ॥
[13]कानीनः कन्यकाजातः सुतोऽथ [14]सुभगासुतः ।
सौभागिनेयः [15]स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥

---

१ षट्कानि वेश्यायाः । २ एकं जनसत्कृतवेश्यायाः । ३ द्वे कुट्टन्याः । ४ त्रयं शुभाशुभनिरूपिण्याः । ५ अष्टौ रजस्वलायाः । ६ त्रीणि स्त्रीरजसः । ७ द्वे दोहदवत्याः । ८ द्वे हीनरजस्कायाः । ९ चत्वारि गर्भिण्याः । १० एकैकं तत्तत्समूहस्य । ११ द्वे द्विवारं ऊढायाः । १२ एकं पुनर्भूपतेः । १३ एकं कन्यकासुतस्य । १४ द्वे सुभगासुतस्य । १५ एकं परस्त्रीपुत्रस्य ।

[1]पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ॥
सुतो मातृष्वसुश्चैवं [2]वैमात्रेयो विमातृजः ॥ २५ ॥
अथ [3]बान्धकिनेयःस्याद्बन्धुलश्चासतीसुतः ॥
कौलटेरः कौलटेयो भिक्षुकी तु सती यदि ॥ २६ ॥
तदा [4]कौलटिनेयोऽस्या कौलटेयोऽपि चात्मजः ॥
[5]आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥२७॥
आहुर्दुहितरं [6]सर्वेऽपत्यं तोकं तयोः समे ॥
स्वजाते [7]त्वौरसोरस्यौ [8]तातस्तु जनकः पिता ॥ २८ ॥
[9]जनयित्री प्रसूर्माता जननी [10]भगिनी स्वसा ॥
[11]ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥२९॥
भार्यास्तु भ्रातृवर्गस्य [13]यातरः स्युः परस्परम् ॥
[14]प्रजावती भ्रातृजाया मातुलानी तु मातुली ॥३०॥

---

१ द्वे पितृभगिनीसुतस्य । एवमपि मातृभगिनीसुतस्य । २ एकं सापत्नबन्धोः । ३ पञ्च कुलटापुत्रस्य । ४ द्वे भिक्षार्थं प्रतिगेहमटन्त्याः तस्याः पुत्रस्य । ५ पञ्च पुत्रस्य । ६ द्वे तनयदुहित्रोः । ७ स्वपुत्रस्य । ८ त्रीणि पितुः । ९ चत्वारि जनन्याः । १० द्वे स्वसुः । ११ एकं पतिभगिन्याः । १२ द्वे सुतस्य सुतायाः । १३ एकं भ्रातृवर्गस्य भार्याणाम् । १४ एकं भ्रातृजायायाः । १५ द्वे मातुलान्याः ।

पतिपत्न्योः प्रसूः [1]श्वश्रूः [2]श्वशुरस्तु पिता तयोः ॥
पितुर्भ्राता [3]पितृव्यः स्यान्मातुर्भ्राता तु [4]मातुलः ॥३१॥
[5]श्यालाः स्युर्भ्रातरः पत्न्यः स्वामिनो [6]देवृदेवरौ ॥
[7]स्वस्रीयो भागिनेयः [8]स्याज्जामाता दुहितुः पतिः॥३२॥
[9]पितामहः पितृपिता तत्पिता [10]प्रपितामहः ॥
मातुर्मातामहाद्येवं [11]सपिण्डास्तु सनाभयः ॥ ३३ ॥
[12]समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ॥
[13]सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥
[14]ज्ञातेयं [15]बन्धुता तेषां क्रमाद्भावसमूहयोः ॥
[16]धवः प्रियः पतिर्भर्ता [17]जारस्तूपपतिः समौ॥ ३५ ॥
अमृते जारजः [18]कुण्डो मृते भर्तरि गोलकः ॥

---

१ एकं पत्युः पत्न्या वा मातरि । २ एकं श्वशुरस्य । ३ एकं पितुर्भ्रातरि । ४ एकं मातुर्भ्रातरि । ५ एकं पत्न्या भ्रातरि । ६ द्वे पत्युर्भ्रातरि । ७ द्वे भगिन्याः पुत्रे ८ एकं कन्यायाः भर्तरि । ९ द्वे पितुः पितरि । १० एकं पितामहस्य पितुः । ११ द्वे सप्तपुरुषावधिकेषु । १२ चत्वारि सहोदरस्य भ्रातुः । १३ षट् सगोत्रस्य । १४ एकं ज्ञातीनां भावस्य १५ एकं बन्धुसमूहस्य । १६ चत्वारि पत्युः । १७ द्वे मुख्यादन्यस्य भर्तुः । १८ एकममृते भर्तरि जाराज्जातस्य । १९ एकं मृते भर्तरि जाराज्जातस्य ।

[1]भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ [2]भ्रातरावुभौ ॥३६॥
[3]मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।
[4]श्वश्रूश्वशुरौ श्वशुरौ [5]पुत्रौ पुत्रश्च दुहिता च ॥३७॥
[6]दम्पती जम्पती जायापती भार्यापती च तौ ।
[7]गर्भाशयो जरायुः स्यादुल्वं च [8]कललोऽस्त्रियाम् ॥३८॥
[9]सूतिमासो वैजननो [10]गर्भो भ्रूण इमौ समौ ।
[11]तृतीयाप्रकृतिः षण्ढः क्लीबः पण्डो नपुंसके ॥३९॥
[12]शिशुत्वं शैशवं बाल्यं [13]तारुण्यं यौवनं समे ।
[14]स्यात्स्थाविरं तु वृद्धत्वं वृद्धसङ्घेऽपि वार्धकम् ॥४०॥
[15]पलितं जरसा शौक्ल्यं केशादौ [16]विस्रसा जरा ।
स्यादुत्तानशया [17]डिम्भा स्तनपा च स्तनन्धयी ॥४१॥
[18]बालस्तु स्यान्माणवको [19]वयस्थस्तरुणो युवा ।

---

१ द्वे भ्रातृपुत्रस्य । २ एकं भ्रातृभगिन्योः । ३ चत्वारि मात्रा सहोक्ते पितरि । ४ द्वे सहोक्तयोः श्वश्रूश्वशुरयोः । ५ एकं पुत्रदुहित्रोः । ६ चत्वारि दम्पत्योः । ७ त्रीणि गर्भवेष्टनचर्मणः । ८ एकं शुक्रशोणितमिश्रीभवनस्य । ९ द्वे प्रसवमासस्य । १० द्वे कुक्षिस्थस्य प्राणिनः । ११ पञ्च नपुंसकस्य । १२ त्रयं बालत्वे । १३ द्वे तरुणत्वे । १४ त्रीणि वृद्धत्वे वार्धके वृद्धसमूहेऽपि । १५ एकं जराप्राप्तधवलिमायाः । १६ द्वे जरायाः । १७ चत्वारि स्तनन्धयस्य । १८ द्वे बालस्य । १९ त्रीणि यूनः ।

[१]प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥
[२]वर्षीयान्दशमी ज्यायान् [३]पूर्वजस्त्वग्रियोऽग्रजः ।
[४]जघन्यजे स्युः कनिष्ठयवीयो वरजानुजाः ॥ ४३ ॥
[५]अमांसो दुर्बलश्छातो [६]बलवान्मांसलोंऽसलः ।
[७]तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ॥ ४४ ॥
[८]अवटीटोऽवनाटश्चावभ्रटो नतनासिके ।
[९]केशवः केशिकः केशी [१०]वलिनो वलिभः समौ ॥ ४५ ॥
[११]विकलाङ्गस्त्वपोगण्डः [१२]खर्वो ह्रस्वश्च वामनः ।
[१३]खरणाः स्यात्खरणसो [१४]विग्रस्तु गतनासिकः ॥ ४६ ॥
[१५]खुरणाः स्यात्खुरणसः [१६]प्रज्ञुः प्रगतजानुकः ।
[१७]ऊर्ध्वज्ञुरूर्ध्वजानुः [१८]स्यात्संज्ञुः संहतजानुकः ॥ ४७ ॥
[१९]स्यादेडे बधिरः [२०]कुब्जे गडुलः [२१]कुकरे कुणिः ।

१ षट् वृद्धस्य । २ त्रीण्यतिवृद्धस्य । ३ त्रीणि ज्येष्ठभ्रातुः । ४ पञ्च कनिष्ठभ्रातुः । ५ त्रीणि अबलस्य । ६ त्रीणि बलवतः । ७ पञ्च बृहदुदरस्य । ८ चत्वारि चिपिटनासिकस्य । ९ त्रयं प्रशस्तकेशस्य । १० द्वे जरयाश्लथचर्मणः । ११ द्वे विकलाङ्गावयवस्य । १२ त्रयं ह्रस्वस्य । १३ द्वे तीक्ष्णनासिकस्य । १४ द्वे गतनासिकस्य । १५ द्वे विकटनासिकस्य । १६ द्वे यस्य जान्वोर्महदन्तरालं तस्य । १७ द्वे ऊर्ध्वजानुकस्य । १८ द्वे संलग्नजानुकस्य । १९ द्वे बधिरस्य । २० द्वे कुब्जस्य । २१ द्वे रोगादिना कुण्ठकरस्य ।

[1]पृश्निरल्पतनौ [2]श्रोणः पङ्गौ [3]मुण्डस्तु मुण्डिते ॥४८॥
[4]वलिरः केकरे [5]खोडे खञ्जस्त्रिषु जरावराः ।
[6]जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ॥४९॥
[8]अनामयं स्यादारोग्यं [9]चिकित्सा रुक्प्रतिक्रिया ।
[10]भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥
स्त्री [11]रुग्रुजा चोपतापरोगव्याधिगदामयाः ।
[12]क्षयः शोषश्च यक्ष्मा च [13]प्रतिश्यायस्तु पीनसः ॥५१॥
स्त्री [14]क्षुत् क्षुतं क्षवः पुंसि [15]कासस्तु क्षवथुः पुमान् ।
[16]शोफस्तु श्वयथुः शोथः [17]पादस्फोटो विपादिका ॥५२॥
[18]किलासं सिध्मे [19]कच्छ्वां तु पामपामे विचर्चिका ।
[20]कण्डूः खर्जूश्च कण्डूया [21]विस्फोटः पिटकः स्त्रियाम् ५३

---

१ द्वे अमानुषमासस्य । २ द्वे जङ्घाविकलस्य । ३ द्वे कृतवपनस्य । ४ द्वे नेत्रवि-युक्तस्य । ५ द्वे गतिविकलस्य । ६ अयं देहगतस्य कृष्णबिन्दोः । ७ द्वे तिलवच्चिन्हस्य । ८ द्वे रोगाभावस्य । ९ द्वे रोगप्रतीकारस्य । १० पञ्चौषधस्य । ११ सप्तरोगस्य । १२ त्रीणि क्षयरोगस्य । १३ द्वे पीनसरोगस्य । १४ त्रीणि छिक्केति ख्यातायाः । १५ द्वे कासरोगस्य । १६ त्रीणि शोथस्य । १७ द्वे पादस्फोटस्य । १८ द्वे सिध्मस्य । १९ चतुष्कं खर्जूविशेषस्य । २० अयं खर्ज्वाः । २१ द्वे फोडा इति ख्यातस्य ।

[1]व्रणोऽस्त्रियामीर्ममरुः क्लीबे [2]नाडीव्रणः पुमान्।
[3]कोठो मण्डलकं कुष्ठश्वित्रे [4]दुर्नामकार्शसी ॥ ५४ ॥
[5]आनाहस्तु विबन्धः स्याद् [6]ग्रहणीरुक् प्रवाहिका।
[7]प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥५५॥
व्याधिभेदा [8]विद्रधिः स्त्री ज्वरमेह भगंदराः।
( [9]श्लीपदं पादवल्मीकं [10]केशघ्नस्त्विन्द्रलुप्तकः )
[11]अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वे शुक्रावधेस्त्रिषु ॥५६॥
[12]रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके।
[13]वार्तो निरामयः कल्य [14]उल्लाघो निर्गतो गदात् ॥५७॥
[15]ग्लानग्लास्नू [16]आमयावी विकृतो व्याधितोऽपटुः।
आतुरोऽभ्यमितोऽभ्यान्तः समौ [17]पामनकच्छुरौ ॥ ५८ ॥
[18]दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽ[19]र्शसः।

---

१ त्रीणि व्रणस्य। २ एकं नियमगलद्व्रणस्य। ३ चत्वारि कुष्ठस्य। ४ द्वे अर्शो-रोगस्य। ५ द्वे मलमूत्रनिरोधस्य। ६ द्वे संग्रहणीरोगस्य। ७ त्रीणि वमनरोगस्य। ८ इत्यादयो व्याधिभेदाः। ९ द्वयं श्लीपदरोगस्य। १० द्वयं मस्तककेशरोगस्य। ११ द्वे अश्मर्याः। १२ पञ्च वैद्यस्य। १३ त्रीणि रोगरहितस्य। १४ एवं रोगान्मुक्तस्य। १५ द्वे रोगादिवशाद्दर्षरहितस्य। १६ सप्त रोगिणः। १७ द्वे पामायुक्तस्य। १८ द्वे दद्रुयुक्तस्य दाद इति ख्यातस्य। १९ एवं मर्शोरोगयुक्तस्य। बवासीर इत्याख्यातस्य।

[१]वातकी वातरोगी [२]स्यात्सातिसारोऽतिसारकी ॥ ५९॥
स्युः [३]क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी ।
[४]उन्मत्त उन्मादवति [५]श्लेष्मलः श्लेष्मणः कफी ॥६०॥
[६]न्युब्जो भुग्ने रुजा [७]वृद्धनाभौ तुन्दिलतुन्दिभौ ।
[८]किलासी [९]सिध्मलोऽन्धोऽदृङ् [१०]मूर्छाले मूर्तमूर्छितौ ॥६१॥
[११]शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ।
[१२]मायुः पित्तं [१३]कफः श्लेष्मा स्त्रियां तु [१४]त्वगसृग्धरा ॥६२॥
[१५]पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।
[१६]उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥
[१७]रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम् ।
[१८]बुक्काग्रमांसं हृदयं [१९]हृन्मेदस्तु [२०]वपा वसा ॥ ६४ ॥

१ द्वे वातरोगयुक्तस्य । २ द्वे अतिसारयुक्तस्य । ३ चत्वारि क्लेदयुक्ताक्षिवतः । ४ द्वे उन्मादयुक्तस्य । ५ त्रीणि कफयुक्तस्य । ६ एकं रुजा वक्रपृष्ठस्य । ७ त्रीणि वृद्धोन्नतनाभे । ८ द्वे सिध्मयुक्तस्य । ९ द्वे दृष्टिहीनस्य । १० त्रीणि मूर्च्छायुक्तस्य । ११ षट् रेतसः । १२ द्वे पित्तस्य । १३ द्वे कफस्य । १४ द्वे चर्मणः । १५ षट् मांसस्य । १६ त्रीणि शुष्कमांसस्य । १७ सप्त रुधिरस्य । १८ द्वे कलेजा इति ख्यातस्य । १९ द्वे हृदयाख्यनिम्नदेशस्य । २० त्रीणि मांसजन्यस्नेहस्य ( चर्बी ) ।

पश्चाद्ग्रीवाशिरा [1]मन्या [2]नाडी तु धमनिः शिरा ॥
[3]तिलकं क्लोम [4]मस्तिष्कं गोर्दं [5]किट्टं मलोऽस्त्रियाम् ॥६५॥
[6]अन्त्रं पुरीतद् [7]गुल्मस्तु प्लीहा पुंस्यथ [8]वस्नसा ।
स्नायुः स्त्रियां [9]कालखण्ड यकृती तु समे इमे ॥ ६६ ॥
[10]सृणिका स्यन्दिनी लाला [11]दूषिका नेत्रयोर्मलम् ।
( नासामलं तु [12]सिङ्घाणं [13]पिञ्जूषं कर्णयोर्मलम् ।
[14]मूत्रं प्रस्राव [15]उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥
पुरीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ ।
[16]स्यात्कर्परः कपालोऽस्त्री [17]कीकसं कुल्यमस्थि च ॥६८॥
स्याच्छरीरास्थ्नि [18]कङ्कालः पृष्ठास्थ्नि तु [19]कशेरुका ।
शिरोऽस्थनि [20]करोटिः स्त्री पार्श्वास्थनि तु [21]पर्शुका ॥६९॥

---

१ एकं पश्चात्स्थिताया ग्रीवाशिरायाः । २ त्रयं शिरायाः नाडी इत्याख्यातायाः । ३ द्वे मांसपिण्डविशेषस्य ( फुप्फुस ) । ४ द्वे मस्तकसंभूतघृताकारस्नेहस्य ( मगज ) । ५ द्वे कर्णादिगतमलस्य । ६ द्वे अन्त्रस्य । ७ द्वे वामकुक्षिस्थमांसपिण्डविशेषस्य । ८ द्वे नसा इति ख्यातायाः । ९ द्वे दक्षिणकुक्षिस्थमांसपिण्डस्य । १० त्रीणि लालायाः । ११ एकं नेत्रमलस्य । १२ एकं नासामलस्य । १३ एकं कर्णमलस्य । १४ द्वे मूत्रस्य । १५ अष्ट विष्ठायाः । १६ द्वे शिरोऽस्थिपञ्जरस्य । १७ त्रीणि अस्थिमात्रस्य । १८ एकं शरीरगतास्थिपञ्जरस्य । १९ एकं पृष्ठमध्यगतास्थिपञ्जरस्य । २० एकं शिरोगतास्थिखण्डस्य । २१ एकं पार्श्वगतास्थिनि ।

[1]अङ्गं प्रतीकोऽवयवोपघनोऽथ [2]कलेवरम् ।
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।
[3]पादाग्रं प्रपदं [4]पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ॥ ७१ ॥
तद्ग्रन्थी [5]घुटिके गुल्फौ [6]पुमान्पार्ष्णिस्तयोरधः ।
[7]जङ्घा तु प्रसृता [8]जानूरुपर्वाष्ठीवदस्त्रियाम् ॥ ७२ ॥
[9]सक्थि क्लीबे पुमानूरुस्तत्सन्धिः पुंसि [10]वङ्क्षणः ।
[11]गुदं त्वपानं पायुर्ना [12]बस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥
[13]कटो ना श्रोणिफलकं [14]कटिः श्रोणिः ककुद्मती ।
[15]पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु [16]जघनं पुरः ॥ ७४ ॥
कूपकौ तु नितम्बस्थौ द्वयहीने [17]कुकुन्दरे ।
स्त्रियां [18]स्फिचौ [19]कटिप्रोथावुपस्थो वक्ष्यमाणयोः ॥ ७५ ॥

---

१ चतुष्कं देहावयवस्य । २ द्वादश देहस्य । ३ द्वे पादाग्रस्य । ४ चत्वारि चरणस्य । ५ द्वयं गुल्फयोः । ६ एकं पार्ष्णिभागस्य । ७ द्वे जंघायाः ( जांघ ) । ८ त्रयं जानूपरिभागस्य । १० एकं ऊरुसंधेः ११ त्रीणि विष्ठानिर्गमद्वारस्य १२ एकं मूत्राशयस्य । १३ एकं श्रोणिफलकस्य । १४ त्रयं कट्याः । १५ एकं स्त्रीकट्याः पश्चाद्भागस्य । १६ एकं स्त्रीकट्याः पुरोभागस्य । १७ एकं पृष्ठवंशादधोभागस्थितगर्तयोः । १८ द्वे कटिस्थमांसपिण्डयोः । १९ एकं भगे शिश्ने च ।

[1]भगं योनिर्द्वयोः [2]शिश्नो मेढ्रो मेहनशेफसी ।
[3]मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे [4]त्रिकम् ॥७६॥
[5]पिचण्डकुक्षी जठरोदरं तुन्दं [6]स्तनौ कुचौ ।
[7]चूचुकन्तु कुचाग्रं स्यान्न ना [8]क्रोडं भुजान्तरम् ॥७७॥
उरो वत्सञ्च वक्षश्च [9]पृष्ठन्तु चरमन्तनोः ।
[10]स्कन्धो भुजशिरोंऽसोऽस्त्री सन्धी तस्यैव [11]जत्रुणी
[12]बाहुमूले उभे कक्षौ [13]पार्श्वमस्त्री तयोरधः ।
[14]मध्यमञ्चावलग्नञ्च मध्योऽस्त्री द्वौ परौ द्वयोः ॥७८॥
[15]भुजबाहू प्रवेष्टो दोः [16]स्यात्कफोणिस्तु कूर्परः ।
अस्योपरि [17]प्रगण्डः [18]स्यात्प्रकोष्ठस्तस्य चाप्यधः ॥८०॥
मणिबन्धादाकनिष्ठं करस्य [19]करभो बहिः ।

---

१ द्वे स्त्रीयोनेरपस्य । २ चत्वारि शिश्नस्य । ३ त्रीण्यण्डकोशस्य । ४ एकं पृष्ठवंशाधरभागस्य । ५ पञ्च जठरस्य । ६ द्वे वक्षोजस्य । ७ द्वयं स्तनाग्रस्य । ८ षड्वक्षसि ९ एकं पृष्ठस्य चरमभागस्य । १० त्रीणि भुजशिरसः ( कांध ) । ११ एकं स्कन्धसन्धेः । १२ द्वे कक्षस्य । १३ एकं कक्षयोरधोभागस्य । १४ त्रीणि तनुमध्यस्य ( कमर ) । १५ चत्वारि भुजस्य । १६ द्वे कूर्परस्य । १७ एकं कूर्परस्योपरिभागस्य १८ एकं कूर्परस्याधोभागस्य । १९ एकं मणिबन्धादारभ्य कनिष्ठान्तं करस्य बहिर्भागस्य ।

[1]पञ्चशाखः शयः पाणि[2]स्तर्जनी स्यात्प्रदेशिनी॥८१॥
[3]अङ्गुल्यः करशाखाः स्युः [4]पुंस्यङ्गुष्ठः प्रदेशिनी।
मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात्॥ ८२॥
[5]पुनर्भवः कररुहो[6]नखोऽस्त्री नखरोऽस्त्रियाम्।
[6]प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥
अङ्गुष्ठे सकनिष्ठे [7]स्याद्वितस्तिर्द्वादशाङ्गुलः।
पाणौ [8]चपेट प्रतल[9]प्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥
द्वौ संहतौ संहतल प्रतलौ वामदक्षिणौ।
पाणिर्निकुब्जः [10]प्रसृतिस्तौ युतावञ्जलिः पुमान्॥८५॥
प्रकोष्ठे विस्तृतकरे [11]हस्तो मुष्ट्या तु बद्धया।
[12]सरत्निः [13]स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना॥८६॥
[15]व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्।
[16]ऊर्ध्वविस्तृतदोः पाणिर्नृमाने पौरुषं त्रिषु ॥ ८७ ॥

१ श्रोणिकस्य । २ द्वे अङ्गुष्ठसमीपाङ्गुल्याः ३ द्वे अङ्गुलीमात्रस्य। ४ एकैकं मेगाङ्गुलीनाम्। ५ नखानिनखस्य। ६ एकैकं तर्जन्यादिभिस्तिसृभिरङ्गुल्यै मिश्रं तेऽङ्गुष्ठे विस्तृते। ७ द्वे वितस्तेः। ८ पाणिविस्तृताङ्गुलिकेपाणौ। ९ द्वयं संहततलस्य। १० एकं नर्घाञ्जलेः ११ एकं द्वयोः प्रसृत्योः। १२ एकं चतुर्विंशत्यङ्गुलपरिमितस्य। १३ एकं रत्नेः। १४ एकमरत्नेः। १५ एकं तिर्यग्विस्तृतयोः करयोः हितयोर्बाह्वोरन्तरस्य। १६ एकं पुरुषमानप्रमाणस्य।

[1]कण्ठो गलोऽथ [2]ग्रीवायां शिरोधिः कन्धरेत्यपि ।
[3]कम्बुग्रीवा त्रिरेखा साऽ[4]वटुर्घाटा कृकाटिका ॥८८॥
[5]वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ॥
[6]क्लीबे घ्राणं गन्धवाहा घोणा नासा च नासिका ॥८९॥
[7]ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।
[8]अधस्ताच्चिबुकं [9]गण्डौ कपोलौ तत्परा [10]हनुः ॥९०॥
[11]रदना दशना दन्ता [12]रदास्तालु तु काकुदम् ।
[13]रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य [14]सृक्किणी ॥९१॥
[15]ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां [16]भ्रुवौ स्त्रियौ ।
[17]कूर्चमस्त्री भ्रुवोर्मध्यं [18]तारकाक्ष्णः कनीनिका ॥९२॥
[19]लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।

---

१ द्वे ग्रीवाग्रभागस्य । २ त्रीणि ग्रीवायाः । ३ एकं त्रिरेखायुतायाः । ४ त्रीणि ग्रीवाशिरःसन्धेः पश्चाद्भागस्य घाटीइत्याख्यातस्य । ५ षट् मुखस्य । ६ पञ्च नासिकायाः । ७ चत्वारि ओष्ठस्य । ८ एकमधराधोभागस्य । ठोढीइत्याख्यातस्य । ९ द्वे कपोलस्य ( गाल ) । १० एकं चिबुकस्याधोभागस्य दाढीइत्याख्यातस्य ११ चत्वारि दन्तस्य । १२ द्वे तालुनः । १३ त्रीणि, जिह्वायाः । १४ एकमोष्ठद्वयस्य सन्धिभागस्य । १५ त्रीणि भालस्य । १६ एकैकं नेत्रोर्ध्वभागयोः । १७ एकं भ्रुवोरि भ्रुवोर्मध्ये । १८ एकं अक्ष्णः अक्ष्णोर्मध्यगतकृष्णभागस्य । १९ अष्टौ नेत्रस्य ।

दृग्दृष्टी [1]चास्त्रु नेत्राम्बु रोदनञ्चास्रमश्रु च ॥ ९३ ॥
[2]अपाङ्गौ नेत्रयोरन्तौ [3]कटाक्षोऽपाङ्गदर्शने ।
[4]कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥९४॥
[5]उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।
[6]चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥९५॥
तद्वृन्दे [7]कैशिकं [8]कैश्यमलकाश्चूर्णकुन्तलाः ।
ते ललाटे [9]भ्रमरकाः [10]काकपक्षः शिखण्डकः ॥९६॥
[11]कबरी केशवेशोऽथ [12]धम्मिल्लः संयताः कचाः ॥
[13]शिखा चूडा केशपाशी [14]व्रतिनस्तु सटा जटा॥९७॥
[15]वेणिः प्रवेणी [16]शीर्षण्यशिरस्यौ विशदे कचे ।
पाशः पक्षश्च हस्तश्च कलापार्थाः [17]कचात्परे ॥९८॥
[18]तनूरुहं रोम लोम तद्वृद्धौ [19]श्मश्रु पुम्मुखे ।

---

पञ्चनेत्रोदकस्य । २ एकं नेत्रयोरन्तभागयोः ३ एकमपाङ्गदर्शनस्य । ४ षट् कर्णस्य । ५ पञ्च शिरसः । ६ षट् केशस्य । ७ द्वे केशसमूहस्य । ८ द्वे कुटिलकेशानाम् । ९ एकं ललाटस्थालकानाम् । १० द्वे कुमारचूडायाः । ११ द्वे केशबंधरचनायाः । १२ एकं बद्धकेशस्य । १३ त्रीणि शिखायाः । १४ द्वे व्रतिन शिखायाम् । १५ द्वे सर्पाकाररचितकेशवेशस्य । १६ द्वे निर्मलकेशे । १७ कचपर्यायात् परप्रयुक्ताः पाशादयस्त्रयः केशसमूहवाचिनः । १८ त्रयं रोम्णः । १९ एकं दाढी इति ख्यातस्य ।

[1]आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥
दशैते [2]त्रिष्वलङ्कर्ताऽलङ्करिष्णुश्च [3]मण्डितः ।
प्रसाधितोऽलङ्कृतश्च भूषितश्च परिष्कृतः ॥ १०० ॥
[4]विभ्राट् भ्राजिष्णुरोचिष्णू [5]भूषणं स्यादलङ्क्रिया ।
[6]अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥
मण्डनं चाथ [7]मुकुटं किरीटं पुन्नपुंसकम् ।
[8]चूडामणिः शिरोरत्नं [9]तरलो हारमध्यगः ॥ १०२ ॥
[10]बालपाश्या पारितथ्या [11]पत्रपाश्या ललाटिका ।
[12]कर्णिका तालपत्रं [13]स्यात्कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥
[14]ग्रैवेयकं कण्ठभूषा [15]लम्बनं स्याल्ललन्तिका ।
स्वर्णैः[16]प्रालम्बिकाऽथोरः[17]सूत्रिका मौक्तिकैः कृता ॥ १०४ ॥

---

१ वेषभूषणस्य शोभायाम् । २ द्वे अलङ्कर्तरि । ३ पञ्चालङ्कृतस्य । ४ त्रयमतिशयेन शोभमानस्य । ५ द्वे भूषणक्रियायाः । ६ पञ्चालङ्कारस्य गहना इति ख्यातायाः । ७ द्वे किरीटस्य । ८ द्वे शिरोमणौ । चूडामणि इत्याख्यातस्य । ९ एकं हारमध्यगनायकमणेः ( सुमेरनी ) । १० द्वे सीमन्तभूषणस्य । ११ द्वे ललाटभूषणस्य टीका इत्याख्यातायाः । १२ द्वे ताटङ्कस्य तरकी इत्याख्यातस्य १३ द्वे कुण्डलस्य । १४ द्वे ग्रीवाभरणस्य १५ कण्ठा इत्याख्यातायाः । द्वे आनाभि विलम्बितायाम् । १६ एकं सुवर्णप्रालम्बिकायाः । १७ एकं मौक्तिकरचित-वक्षःस्थलहारायाः मोतीमाला इत्याख्यातायाः ।

[1]हारो मुक्तावली [2]देवच्छन्दोऽसौ शतयष्टिका ।
हारभेदा [3]यष्टिभेदाद्गुच्छगुच्छार्धगोस्तनाः ॥ १०५ ॥
[4]अर्धहारो माणवक एकावल्येकयष्टिका ।
सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥
[5]आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।
[6]केयूरमङ्गदं तुल्ये [7]अङ्गुलीयकमूर्मिका ॥ १०७ ॥
[8]साक्षराऽङ्गुलिमुद्रा स्यात्कङ्कणं [9]करभूषणम् ।
स्त्रीकट्यां [10]मेखला काञ्ची सप्तकी रशना तथा ॥ १०८ ॥
क्लीबे सा रसनं चाथ पुंस्कट्यां [11]शृङ्खलं त्रिषु ।
[12]पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥ १०९ ॥
[13]हंसकः पादकटकः किङ्किणी [14]क्षुद्रघण्टिका ।
त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ॥ ११० ॥

---

१ द्वे मुक्ताहारस्य । २ एवं शतयष्टिकहारस्य । ३ द्वात्रिंशद्यष्टिको गुच्छः चतुर्विंशतियष्टिको गुच्छार्धः, चतुर्यष्टिको गोस्तनः । ४ द्वादशयष्टिकोऽर्धहारः । विंशतियष्टिको माणवकः ५ चत्वारि प्रकोष्ठाभरणस्य ६ द्वे अङ्गदभूषणस्य (बाजूबंद) । ७ द्वे अङ्गुल्याभरणस्य । (अंगूठी) ८ एवं साक्षराङ्गुल्याभरणस्य मोहरछदितस्य अंगूठी । ९ द्वे करबन्धभूषणस्य कंकण इत्याख्यातस्य १० पञ्च स्त्रीणां कटिभूषणस्य करधनी इत्याख्यातस्य । ११ एवं पुरुषकटीभूषणस्य पुरुषकरधनी १२ षट्कं नूपुरस्य पैजनी इत्याख्यातस्य । पादकटक कड़ा इत्याख्यातायाः घुंघुरू इत्याख्यातस्य च ।

[1]वाल्कं क्षौमादि [2]फालं तु कार्पासं बादरं च तत् ।
[3]कौशेयं कृमिकोशोत्थं [4]राङ्कवं मृगरोमजम् ॥ १११ ॥
[5]अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरम् ।
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥
पत्रोर्णं धौतकौशेयं बहुमूल्यं [8]महाधनम् ।
[9]क्षौमं दुकूलं स्याद् द्वे [10]तु निवीतं प्रावृतं त्रिषु ॥ ११३ ॥
स्त्रियां बहुत्वे वस्त्रस्य [11]दशाः स्युर्वस्त्रयोर्द्वयोः ।
[12]दैर्घ्यमायाम आरोहः [13]परिणाहो विशालता ॥ ११४ ॥
[14]पटच्चरं जीर्णवस्त्रं समौ [15]नक्तककर्पटौ ।
[16]वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ॥ ११५ ॥
[17]सुचेलकः पटोऽस्त्री स्याद्वराशिः स्थूलशाटकः ।
निचोलः प्रच्छदपटः समौ [20]रल्लककम्बलौ ॥ ११६ ॥

---

१ एकं वल्कमयस्य क्षौमादि निर्मितवस्त्रस्य । २ त्रीणि कार्पासवस्त्रस्य । ३ एकं कृमिकोशोत्थवस्त्रस्य रेशमी इत्याख्यातस्य । ४ एकं मृगरोमजस्य ऊनी इत्याख्यातस्य । ५ चत्वारि नूतनवस्त्रस्य । ६ एकं धौतवस्त्रयुगस्य । ७ एकं धौतकौशेयस्य । ८ एकं बहुमूल्यवस्त्रस्य । ९ द्वे क्षौमवस्त्रस्य । १० द्वे प्रावृतवस्त्रस्य । ११ द्वे वस्त्रप्रान्तयोः । १२ त्रयं वस्त्रादिदैर्घ्यस्य । १३ द्वे विस्तारस्य । १४ द्वे जीर्णवस्त्रस्य । १५ द्वे जीर्णवस्त्रखण्डस्य । १६ षड् वस्त्रस्य । १७ द्वे शोभनवस्त्रस्य । १८ द्वे उपरिवस्त्रस्य । १९ द्वे शीतापनोदनार्थस्य । २० द्वे कम्बलस्य ।

[1]अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके ।
द्वौ [2]प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ ११७ ॥
संव्यानमुत्तरीयं च [3]चोलः कूर्पासकोऽस्त्रियाम् ।
[4]नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ॥ ११८ ॥
[5]अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम् ।
[6]स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥११९॥
अस्त्री [7]वितानमुल्लोचो [8]दूष्याद्यं वस्त्रवेश्मनि ।
[9]प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥१२०॥
[10]परिकर्माङ्गसंस्कारः [11]स्यान्मार्ष्टिर्मार्जना मृजा ।
[12]उद्वर्तनोत्सादने द्वे समे [13]आप्लाव आप्लवः ॥१२१॥
स्नानं [14]चर्चा तु चार्चिक्यं स्थासकोऽथ [15]प्रबोधनम् ।
अनुबोधः [16]पत्रलेखा पत्राङ्गुलिरिमे समे ॥ १२२ ॥

१ चत्वारि परिहित वाससि धोती इत्याख्यातायाः । २ पञ्च उत्तरीयस्य अंगोछा इत्यस्य । ३ द्वे चोलस्य ४ एकं रजाई इति ख्यातस्य । ५ एकं लहंगा इति ख्यातस्य । ६ एकं पादापर्यन्तवस्त्रस्य । ७ द्वे चन्दवा इति ख्यातस्य । ८ एकं वस्त्ररचितगृहस्य (तम्बू)। ९ अपजवनिकायाः [ कनात ] । १० कुङ्कुमादिना शरीरे कृत संस्कारमात्रस्य । ११ त्रयं प्रोञ्छणादिना देहनिर्मलीकरणस्य ।।१२ द्वे पिष्टादिना शरीरमलापकरणस्य । उबटन इत्याख्यातस्य । १३ त्रीणि स्नानस्य १४ त्रीणि चन्दनादिना देहविलेपस्य । १५ द्वयं गन्धस्य पुनर्गन्धव्यक्तीकरणे । १६ द्वे कपोलादौ कस्तूर्यादिरचितपत्रावल्याः ।

[1]तमालपत्रतिलकचित्रकाणि विशेषकम् ।
द्वितीयं च तुरीयं च न स्त्रियामथ [2]कुङ्कुमम् ॥ १२ ॥
काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने ।
रक्तसंकोचपिशुनं धीरं लोहितचन्दनम् ॥ १२४ ॥
[3]लाक्षा राक्षा जतुक्लीबे यावोऽलक्तो द्रुमामयः ।
[4]लवंगं देवकुसुमं श्रीसंज्ञमथ [5]जायकम् ॥ १२५ ॥
कालीयकञ्च कालानुसार्यं चाथ समार्थकम् ।
वंशिकागुरुराजार्हलोहं कृमिजजोङ्गकम् ॥ १२६ ॥
कालागुर्वगुरुस्यात्तन्मङ्गल्या मल्लिगन्धि यत् ।
[8]यक्षधूपः सर्जरसो रालसर्वरसावपि १२७ ॥
बहुरूपोऽप्यथ [9]वृकधूपकृत्रिमधूपकौ ।
[1]तुरुष्कः पिण्डः सिह्लो यावनोऽप्यथ [10]पायसः ।
श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ ॥

---

१ चत्वारि तिलकस्य । २ एकादश कुङ्कुमस्य केशर इत्याख्यातस्य । ३ षट्कं लाक्षायाः महावर इत्यस्य । ४ त्रीणि लवङ्गस्य । ५ त्रयं जयफलइत्यस्य । ६ षट्कं कृष्णागुरुणः, कृष्णअगर इत्यस्य । ७ एकं गुग्गुलस्य । ८ अनेकार्थानि धूपस्य । ९ चत्वारि सिल्हकपदस्य ( धूपविशेषस्य ) ।

[1]मृगनाभिर्मृगमदः कस्तूरी चाथ [2]कोलकम् ॥ १२९॥
कङ्कोलकं कोशफलकमथ [3]कर्पूरमस्त्रियाम् ।
घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥
[4]गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।
[5]तैलपर्णिक गोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१ ॥
[6]तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं चाथ [7]जातीकोशजातीफले समे ॥ १३२ ॥
[8]कर्पूरागरुकस्तूरीकङ्कोलैर्यक्षकर्दमः ।
[9]गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३ ॥
[10]चूर्णानि वासयोगाः [11]स्युर्भावितं वासितं त्रिषु ।
संस्कारो गन्धमाल्याद्यैर्यः [12]स्यात्तदधिवासनम् ॥१३४॥
[13]माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु [14]गर्भकः।

---

१ त्रयं कस्तूर्याः । त्रीणि कंकोलस्य । ३ पञ्च कर्पूरस्य । ४ चत्वारि चन्दनस्य । ५ एकमन्यचन्दनभेदाः । ६ पञ्च रक्तचन्दनस्य । ७ द्वे जातिफलस्य (जायफल) । ८ "कर्पूरागरुकस्तूरीकंकोलघुसृणानि च । एकीकृतमिदं सर्वं यक्षकर्दम इष्यते" । ९ चत्वारि गात्रानुलेपयोग्यस्य । १० द्वे पटवासादिचूर्णमात्रस्य । ११ द्वे गन्धद्रव्येण वासितस्य । १२ एकं गन्धमाल्यधूपादिभिर्वस्त्रताम्बूलादिना संस्कारस्य १३ त्रयं मूर्ध्नि धृतायाः कुसुमावलेः । १४ एकं केशमध्ये धृतमालायाः ।

[1]अग्रश्चर्कं शिखालम्बि पुरो न्यस्तं [2]ललामकम् ॥१३५॥
[3]प्रालम्बमृजुलम्बि [4]स्यात्कण्ठाद्वैकक्षिकं तु तत् ।
यत्तिर्यक् क्षिप्तमुरसि [5]शिखास्वापीडशेखरौ ॥ १३६ ॥
[6]रचना स्यात्परिस्पन्द [7]आभोगः परिपूर्णता ।
[8]उपधानन्तूपबर्हः [9]शय्यायां शयनीयवत् ॥ १३७ ॥
शयनं [10]मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ।
[11]गेन्दुकः कन्दुको [12]दीपः प्रदीपः [13]पीठमासनम्१३८
[14]समुद्गकः संपुटकः [15]प्रतिग्राहः पतद्ग्रहः ।
[16]प्रसाधनी कङ्कतिका [17]पिष्टातः पटवासकः ॥१३९॥
[18]दर्पणे मुकुरादर्शौ [19]व्यजनं तालवृन्तकम् ।

इति मनुष्यवर्गः ॥ ६ ॥

---

१ एकं शिखायां लम्बमानमाल्यस्य । २ एकं ललाटपर्यन्तलम्बमानस्य । ३ एकं कण्ठादृजुलम्बिमालस्य । ४ एकं तिर्यक् माल्यस्य । ५ द्वे शिखास्थमाल्यस्य । ६ द्वे रचनादिरचनायाः । ७ द्वे सर्वतोभावपरिपूर्णतायाः । ८ द्वे उपधानस्य (तकिया) । ९ त्रीणि शय्यायाः (पलङ्गादि.) । १० चत्वारि खट्वायाः । ११ द्वे कन्दुकस्य (गेंद) । १२ द्वे दीपस्य । १३ द्वे आसनस्य । १४ द्वे संपुटस्य (डिब्बा) । १५ द्वे पिकदानी इति ख्यातस्य । १६ [illegible] (कंघी) । १७ द्वे [illegible] इति ख्यातस्य । १८ त्रीणि दर्पणस्य १९ द्वे व्यजनस्य ।

[1]सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्ववायः सन्तानो [2]वर्णाःस्युर्ब्राह्मणादयः ॥ १ ॥
[2]विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।
[3]राजबीजी राजवंश्यो [4]बीज्यस्तु कुलसम्भवः ॥ २ ॥
[5]महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।
[6]ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥
आश्रमोऽस्त्री [7]द्विजात्यग्रजन्मभूदेववाडवाः ।
विप्रश्च ब्राह्मणोऽसौ [8]षट्कर्मा यागादिभिर्वृतः ॥ ४ ॥
[9]विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः ।
धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः ॥५॥
धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।
दूरदर्शी दीर्घदर्शी [10]श्रोत्रियश्छान्दसौ समौ ॥ ६ ॥
( [11]मीमांसको जैमिनीये [12]वेदान्ती ब्रह्मवादिनी ।

---

१ नव वंशस्य । २ एते वर्णाः । ३ द्वे राजवंशोत्पन्नस्य । ४ द्वे कुलमात्रोत्पन्नस्य । ५ षट् सज्जनस्य । ६ एते चत्वार आश्रमशब्दवाच्याः । ७ षट् ब्राह्मणस्य । ८ एकं "इज्याध्ययनदानानि याजनाध्यापने तथा प्रतिग्रहश्चैभिर्युक्तः षट्कर्मा विप्र उच्यते" इति । ९ द्वाविंशतिः पण्डितस्य १० द्वे वेदाध्यायिनः । ११ द्वे मीमांसाशास्त्रवेत्तुः १२ द्वे वेदान्तशास्त्रज्ञस्य

[1]वैशेषिके स्यादौलूक्यः [2]सौगतः शून्यवादिनी ॥ १॥
[3]नैयायिकस्त्वक्षपादः [4]स्यात्स्याद्वादिक आर्हकः ।
[5]चार्वाकलौकायतिकौ तत्कार्ये [6]सांख्यकापिलौ ॥ २ ॥
[7]उपाध्यायोऽध्यापकोऽथ [8]स्यान्निषेकादिकृद्गुरुः ।
[9]मंत्रव्याख्याकृदाचार्य आदेशा त्वध्वरे [10]व्रती ॥ ७ ॥
यष्टा च यजमानश्च स सोमवति [11]दीक्षितः ।
[12]इज्याशीलो यायजूको [13]यज्वा तु विधिनेष्टवान्॥८॥
स गीष्पतीष्ट्या [14]स्थपतिः [15]सोमपीथी तु सोमपाः ।
[16]सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥
[17]अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।

---

१ द्वे षट्पदार्थवादिनि ।। २ द्वे नास्तिकस्य । ३ द्वे न्यायशास्त्रज्ञस्य । ४ द्वे जैनो अर्हन्मतवादिनः । ५ द्वे देहात्मवादिनो चार्वाकस्य । ६ द्वे सांख्यशास्त्रज्ञस्य । ७ द्वे अध्यापकस्य । ८ एकं गर्भाधानादिकर्तुः । ९ एकमाचार्यस्य । तल्लक्षणम् "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सांगं च सरहस्यं च तमाचार्यं प्रचक्षते" इति । १० त्रीणि यजमानस्य । ११ एकं सोमयाग दीक्षितस्य । १२ द्वे यजनशीलस्य । १३ एकं विधिना यागकर्तुः । १४ बृहस्पतिसवविधिना इष्टवतः एकं । १५ एकं सोमपायिनि । १६ एकं विश्वजिद्यागकर्तुः । १७ एकं सांगवेदाध्ययनकर्तुः ।

लब्धानुज्ञः [1]समावृत्तः [2]सुत्वा त्वभिषवे कृते ॥ १० ॥
[3]छात्रान्तेवासिनौ शिष्ये [4]शैक्षाः प्राथमकल्पिकाः ।
एकब्रह्मव्रताचारा मिथः [5]सब्रह्मचारिणः ॥ ११ ॥
[6]सतीर्थ्यास्त्वेकगुरवश्चितवान [7]ग्निमग्निचित् ।
पारम्पर्योपदेशे [8]स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥
[9]उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ [10]उपक्रमः ।
[11]यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥
[12]पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।
एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥
[13]समज्या परिषद्गोष्ठी सभासमितिसंसदः ।
आस्थानी क्लीबमास्थानं स्त्री नपुंसकयोः सदः ॥१५॥
[14]प्राग्वंशः प्राग्घविर्गेहात्सदस्या विधिदर्शिनः ।

---

१ एकं गुरोर्लब्धानुज्ञस्य । २ एकं कृताभिषवस्नानस्य । ३ त्रीणि शिष्यस्य । ४ द्वे आरब्धाध्ययनानां बटूनाम् । ५ एकमेकशाखाध्यायिनाम् । ६ एकं समानगुरूणाम् । ७ एकं कृताग्निचयनस्य । ८ द्वयं लोकपरम्परयोपदेशस्य । ९ एकं प्रथमज्ञानस्य । १० एकं ज्ञानपूर्वकारम्भस्य । ११ सप्त यज्ञस्य । १२ एते प्रत्येकं महायज्ञादिनामका महाः यज्ञाः । १३ नव सभायाः । १४ एकं सदस्यादीनां गृहस्य ।

[1]सभासदः सभास्तारा: सभ्याः समाजिकाश्च ते ॥१६॥
[2]अध्वर्यूद्गातृहोतारो यजुः सामर्ग्विदः क्रमात् ।
आग्नीध्राद्या धनैर्वार्या ऋत्विजो [3]याजकाश्चते ॥१७॥
[4]वेदिः परिष्कृता भूमिः समे [5]स्थण्डिलचत्वरे ।
[6]चषालो यूपकटकः [7]कुम्बा सुगहनावृतिः ॥ १८ ॥
[8]यूपाग्रं तर्म निर्मन्थ्यदारुणि [9]त्वरणिर्द्वयोः ।
[10]दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥
अग्नित्रयमिदं [11]त्रेता प्रणीतः संस्कृतोऽनलः ।
[12]समूह्यः परिचाय्योपचाय्यावग्नौप्रयोगिणः ॥ २० ॥
यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।
तस्मिन्नानाय्योऽथाग्नायी स्वाहा च हुतभुक्प्रिया ॥२१॥

---

१ चत्वारि सभ्येषु । २ एते यथाक्रमं यजुरादिवेदविदः । ३ एवं धनादिना वृत्विग्यजमानस्य । ४ एवं यज्ञार्थं साधितभूम्याः । ५ द्वे यज्ञार्थं संस्कृतभूमा त्रस्य । ६ एवं यूपशिरसि वलय काष्ठविशेषस्य । ७ एवं यागभूमावन्तर्यज्ञादिदर्शनार्थ वेष्टनस्य । ८ द्वे यूपाग्रस्य । ९ एवं अग्निजननार्थनिर्मन्थनीयकाष्ठस्य १० एते त्रयोऽग्नयः । ११ एकमग्नित्रयस्य । १२ एते त्रयः अग्निसंस्कारार्थं स्थलविशेषे प्रयुक्ताः । १३ एवं गार्हपत्यादुद्धृत्य दक्षिणाग्निप्रणयनस्य । १४ त्रयमग्नेः प्रिय याम ।

ऋक् [1]सामिधेनी धाय्या च या स्यादग्निसमिन्धने ।
गायत्रीप्रमुखं छन्दो हव्यपाके [2]चरुः पुमान् ॥ २२ ॥
[3]आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।
[4]धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ २३ ॥
[5]पृषदाज्यं सदध्याज्ये [6]परमान्नं तु पायसम् ।
[7]हव्यकव्ये दैवपित्र्ये अन्ने पात्रे स्रुवादिकम् ॥२४॥
[8]ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ।
[9]उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥ २५ ॥
[10]परम्पराकं शमनं प्रोक्षणं च वधार्थकम् ।
वाच्यलिङ्गाः [11]प्रमीतोपसंपन्नप्रोक्षिता हते ॥ २६ ॥
[12]सान्नाय्यं हविरग्नौ तु [13]हुतं त्रिषु वषट्कृतम् ।
[14]दीक्षान्तोऽवभृथो यज्ञे तत्कर्मार्हं तु [15]यज्ञियम् ॥२७

---

१ द्वे वह्निज्वलनप्रयुक्त ऋचः । २ एकमग्निमुखे हूयमानान्नस्य चरुइत्याख्यातस्य । ३ एक तप्ते पयसि दध्यानयनस्य । ४ एकं मृगचर्मरचितव्यजनस्य । ५ एकं दधियुक्ताज्यस्य । ६ द्वे क्षीरान्नस्य । ७ एकैकं यथासंख्यदेवपितृभ्यो दीयमानान्नस्य हव्यकव्य इत्याख्यातस्य । ८ एते त्रयः स्रुवो भेदाः । ९ एकं यज्ञेऽभिमन्त्र्य हतपशोः १० त्रयं यज्ञियपशुहननस्य । ११ त्रीणि यागार्थं हत पशुमात्रे । १२ एकं हविर्विशेषस्य । १३ द्वे हुतस्य । १४ एकं दीक्षा समाप्त्यै इष्टिपूर्वकस्नानस्य । १५ एकं यज्ञयोग्यवस्तुनः ।

[१]त्रिष्वथ क्रतुकर्मेष्टं [२]पूर्तं [२]खातादि कर्मणि ।
[३]अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥
[४]त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रादेशनं निर्वपणमपवर्जनमंहतिः ।
मृतार्थं तदहे दानं त्रिषु [६]स्यादौर्ध्वदैहिकम् ॥ ३० ॥
[५]पितृदानं निवापः [७]स्याच्छ्राद्धं तत्कर्म शास्त्रतः ।
[८]अन्वाहार्यं मासिकेंऽशोऽष्टमोऽह्नः [९]कुतपोऽस्त्रियाम् ३१
[१०]पर्येषणा परिष्टिश्चान्वेषणा च गवेषणा ।
[११]सनिस्त्वध्येषणा [१२]याच्ञाऽभिशस्तिर्याचनाऽर्थना ॥
षट् तु [१३]त्रिष्वर्घ्यमर्घार्थे [१४]पाद्यं पादाय वारिणि ।

---

१ एकं क्रतुकर्मणः । २ एकं देवालयारामादिनिर्माणस्य । ३ क्रमेणैकैकं यज्ञशेषस्य देवपित्रादिभुक्तशेषान्नस्य । ४ नवोद्दानस्य । ५ एकं मृतार्थदानस्य । ६ द्वे प्रतिवत्सरं पितृउद्देशेन दानस्य । ७ एकं श्राद्धस्य । ८ द्वे अमावास्याश्राद्धस्य । ९ एकमह्नो अष्टमो भागः कुतप इति स्मृतः । १० षडपि धर्मादन्वेषणस्य । ११ द्वे गुरुप्रार्थनस्य । १२ पञ्चापि याचनायाः । १३ एकं पूजोपचारार्थजले । १४ एकं पादार्थजले ।

[1]क्रमादातिथ्याति [2]थेये अतिथ्यर्थेऽत्र साधुनि ॥३३॥
[3]स्युरावेशिक आगन्तुरतिथिर्ना गृहागते ।
[4]प्राघूर्णिकः [5]प्राघुणकश्चाभ्युत्थानं तु गौरवम् ॥३४॥
[6]पूजा नमस्याऽपचितिः सपर्य्याऽर्चार्हणाः समाः ।
[7]वरिवस्या तु शुश्रूषा परिचर्य्याप्युपासना ॥ ३५ ॥
[8]व्रज्याऽटाट्या पर्यटनं [9]चर्य्या त्वीर्यापथे स्थितिः ।
[10]उपस्पर्शस्त्वाचमनमथ [11]मौनमभाषणम् ॥ ३६ ॥
( [12]प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः ।
वाल्मीकिश्चाथ [13]गाधेयो विश्वामित्रश्च कौशिकः ।
[14]व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः ॥ )
[15]आनुपूर्वी स्त्रियां वाऽऽवृत्परिपाटी अनुक्रमः ।
[16]पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः ॥ ३७ ॥

---

१ एकमतिथ्यर्थे । २ एकमतिथौ यस्यार्थो तत्र । ३ त्रीणि गृहागतस्य । ४ द्वे अभ्यागतस्य । ५ द्वे उत्थानपूर्वकसत्कारस्य । ६ षट् पूजायाः । ७ चत्वारि सेवायाः । ८ त्रीण्यटनस्य । ९ एकं ध्यानाद्युपाये परिव्राजकादीनां स्थितेः । १० द्वे आचमनस्य । ११ द्वे मौनस्य । १२ चत्वारि वाल्मीकेः । १३ त्रयं विश्वामित्रस्य । १४ चत्वारि व्यासस्य । १५ पञ्चानुक्रमस्य । १६ त्रीण्यतिक्रमस्य ।

[1]नियमो व्रतमस्त्रीतच्चोपवासादि पुण्यकम् ।
[2]औपवस्तं तूपवासो [3]विवेकः पृथगात्मता ॥ ३८ ॥
[4]स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिरथाञ्जलिः ।
पाठे [5]ब्रह्माञ्जलिः पाठे विप्रुषो [6]ब्रह्मबिन्दवः ॥ ३९ ॥
ध्यानयोगासने [7]ब्रह्मासनं [8]कल्पे विधिक्रमौ ।
[9]मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः ॥४०॥
संस्कारपूर्वं ग्रहणं [10]स्यादुपाकरणं श्रुतेः ।
समे तु [11]पादग्रहणमभिवादनमित्युभे ॥ ४१ ॥
[12]भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ।
[13]तपस्वी तापसः पारिकाङ्क्षी [14]वाचंयमो मुनिः ॥४२॥
तपः क्लेशसहो [15]दान्तो [16]वर्णिनो ब्रह्मचारिणः ।
ऋषयः सत्यवचसः स्नातकस्त्वाप्लुतो व्रती ॥ ४३ ॥

---

१ द्वे नियमस्य । २ द्वे उपवासस्य । ३ एकं पृथगात्मतायाः । ४ एकं ब्रह्मचर्याध्ययनाध्यापनयोः संपत्तेः । ५ एकं वेदपाठने योऽञ्जलिस्तस्य । ६ एकं वेदपाठे मुखान्निर्गतजलकणानाम् । ७ एकं ध्यानयोगासने । ८ द्वयं [illegible] ९ [illegible] मुख्यः । मुख्याभावे [illegible] प्रकारः । १० एकं संस्कार पूर्वकं श्रुतेर्ग्रहणस्य । ११ द्वे नमस्कारे [illegible] नमस्कारविशेषस्य । १२ पञ्च सन्यासिनः । १३ त्रयं तपोयुक्तस्य । १४ द्वे वाग्यतस्य । १५ एकं तपः क्लेशोऽस्य [illegible] । १६ द्वे ब्रह्मचारिणः । १७ द्वे ऋषि[illegible]स्य । १८ एकं कृतसमावर्तनस्य ।

[१]ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥
यः स्थण्डिले व्रतवशाच्छेते [२]स्थण्डिलशाय्यसौ ॥४४॥
स्थाण्डिलश्चाथ [३]विरजस्तमसः स्युर्द्वयातिगाः ॥
[४]पवित्रः प्रयतः पूतः [५]पाखण्डाः सर्वलिङ्गिनः ॥४५॥
पालाशो दण्ड [६] आषाढो व्रते [७]राम्भस्तु वैणवः ॥
अस्त्री [८]कमण्डलुः कुण्डी [९]व्रतिनामासनं [१०]वृषी ॥४६॥
[११]अजिनं चर्म कृत्तिः स्त्री [१२]भैक्षं भिक्षाकदम्बकम् ॥
[१३]स्वाध्यायः स्याज्जपः [१४]सुत्याऽभिषवः सवनं च सा॥४७॥
सर्वैनसामपध्वंसि जप्यं [१५]त्रिष्वघमर्षणम् ॥
[१६]दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ॥४८॥
शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः[१७] ॥
[१८]नियमस्तु स यत्कर्म नित्यमागन्तु साधनम् ॥[१]४९ ॥

---

१ त्रीणि यतीनाम् । २ द्वे यो नियमवशात् भूमिविशेषे शेते तस्य । ३ द्वे रजो-रहितेषु । ४ शुद्धपवित्रस्य । ५ द्वे वंशादिदण्डादिषु । ६ एकं ब्रह्मचारिणः । ७ एकं वेणुदण्डस्य । ८ द्वे व्रतिनां जलपात्रस्य । ९ एकं व्रतिनामासनस्य । १० त्रीणि मृगादेश्चर्मणि । ११ एकं भिक्षासमूहस्य । १२ द्वे वेदाभ्यासस्य । १३ त्रीणि सोमाभिषवस्य । १४ एकं सर्वपापनाशकजपादेः । १५ ऐकैकं यथाक्रममावास्यायां पूर्णमास्यां च विहितयागयोः । १६ एकं यमस्य । १७ एकं मज्जनादिना साधनस्य ।

( [1]क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु ॥ ४९ ॥
[2]उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥
[3]प्राचीनावीतमन्यस्मिन्नि[4]वीतं कण्ठलम्बितम् ॥ ५० ॥
अङ्गुल्यग्रे तीर्थं दैवं [6]स्वल्पाङ्गुल्योर्मूले [7]कायम् ॥
मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य [8]ब्राह्मम् ॥
[9]स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥
[10]देवभूयादिकं [11]तद्वत्कृच्छ्रं सान्तपनादिकम् ॥ ५२ ॥
सन्यासवत्यनशने पुमान् [12]प्रायोऽथ [13]वीरहा ॥
नष्टाग्निः [14]कुहना लोभान्मिथ्येर्यापथकल्पना ॥५३॥
[15]व्रात्यः संस्कारहीनः स्यादस्वाध्यायो [16]निराकृतिः ॥
[17]धर्मध्वजी लिङ्गवृत्तिरवकीर्णी [18]क्षतव्रतः ॥ ५४ ॥
सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥
अंशुमानभि [19]निर्मुक्ताभ्युदितौ च यथाक्रमम् ॥५५॥

---

१ चतुर्थं मुण्डनस्य। २ एकमुपवीतस्य। ३ एकमपसव्यस्य। ४। एकं निवीतस्य ५ एकं दैवतीर्थस्य। ६ एकं प्राजापत्यतीर्थस्य। ७ एकं पितृतीर्थस्य। ८ एकं ब्रह्मतीर्थस्य। ९ एवं ब्रह्मभावस्य। १० अयं देवभावस्य। ११ एकं कृच्छ्रस्य। १२ एकं अनशनपूर्वकमोक्षमरणे। १३ द्वे नष्टाग्नेः। १४ एकं दम्भेन ध्यानमौनादिप्रदर्शकस्य। १५ एकमुपनयनादिसंस्कारहीनस्य। १६ एकं स्वशाखाध्ययनशून्यस्य। १७ एकं धर्मविक्रयं कृत्वा जीविकाकरस्य। १८ द्वे भग्नव्रतस्य। १९ यथाक्रममेकैकं सूर्यास्तोदयसमये निद्रितस्य।

[1]परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥
[2]परिवित्तिस्तु तज्ज्यायान् [3]विवाहोपयमौ समौ ॥ ५६ ॥
तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥
[4]व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ॥ ५७ ॥
[5]त्रिवर्गो धर्मकामार्थैः [6]चतुर्वर्गः समोक्षकैः ॥
[7]सबलैस्तैश्चतुर्भद्रं [8]जन्याः स्निग्धा वरस्य ये ॥ ५८ ॥

॥ इति ब्रह्मवर्गः ॥ ७ ॥

[9]मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ॥
[10]राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥
राजा तु प्रणताशेषसामंतः [11]स्यादधीश्वरः ॥
[12]चक्रवर्ती सार्वभौमो नृपोऽन्यो [13]मण्डलेश्वरः ॥ २ ॥
येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ॥

---

१ एकमविवाहितसज्येष्ठविवाहितानुजस्य । २ एकमविवाहितज्येष्टस्य । ३ षट् विवाहस्य । ४ पञ्च मैथुनस्य । ५ एकं धर्मकामार्थसमूहस्य । ६ एकं धर्मकामार्थमोक्षसमूहस्य । ७ सबलितस्यैकम् । ८ एक जामातृवर्यस्यानाम् । ९ पञ्च क्षत्रियस्य । १० षट राज्ञः । ११ एकं प्रणताशेषदेशान्तरस्य । १२ द्वे आसमुद्रक्षितीश्य । १३ एकं चक्रवर्तिनोऽन्यस्य ॥

शास्ति यश्चाज्ञया राज्ञः स [1]सम्राडथ [2]राजकम् ॥ ३ ॥
[3]राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ॥
[4]मंत्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः ॥ ४ ॥
[5]महामात्राः प्रधानानि पुरोधास्तु [6]पुरोहितः ॥
द्रष्टरि व्यवहाराणां [7]प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥
[8]प्रतिहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः ॥
[9]रक्षिवर्गस्त्वनीकस्थोऽ[10]थाध्यक्षाधिकृतौ समौ ॥ ६ ॥
[11]स्थायुकोऽधिकृतो ग्रामे गोपो [12]ग्रामेषु भूरिषु ॥
[13]भौरिकः कनकाध्यक्षो [14]रूप्याध्यक्षस्तु नैष्किकः ॥ ७ ॥
अंतःपुरे त्वधिकृतः [15]स्यादन्तर्वंशिको जनः ॥
[16]सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ८ ॥

---

१ एवं छत्रराजसूयादिविशेषणत्रयविशिष्टस्य । २ एवं नृपतिगणस्य । ३ एवं क्षत्रियगणस्य । ४ त्रयं बुद्धिसहायस्य । ५ द्वे मुख्यानां राजसहायानाम् । ६ द्वे पुरोहितस्य । ७ द्वे वादप्रतिवादिनिर्मितविवादानां द्रष्टरि [ न्यायाधीश ] । ८ पञ्च द्वारपालस्य । ९ द्वे राजरक्षकगणस्य । १० द्वे अधिकारिणः । ११ एकं ग्रामाधिकृतस्य । १२ बहुग्रामाधिकृतस्य । १३ द्वे सुवर्णाध्यक्षस्य । १४ रूप्याधिकृतस्य । १५ एकमन्तःपुरोऽधिकृतस्य । १६ चत्वारि वेत्रधारिणः ।

[1]षण्ढो वर्षवरस्तुल्यौ [2]सेवकार्थ्यनुजीविनः ॥
विषयानन्तरो राजा [3]शत्रुर्मित्र[4]मतः परम् ॥ ९ ॥
[5]उदासीनः परतरः [6]पार्ष्णिग्राहस्तु पृष्ठतः ॥
[7]रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥
द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ॥
अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥
[8]वयस्यः स्निग्धः सवया अथ [9]मित्रं सखा सुहृत् ॥
[10]सख्यं साप्तपदीनं [11]स्यादनुरोधोऽनुवर्तनम् ॥ १२
[12]यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ॥
चारश्च [13]गूढपुरुषश्चाप्तप्रत्ययितौ समौ ॥ १३ ॥
[14]सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ॥
स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥ १४ ॥
[15]तान्त्रिको ज्ञातसिद्धान्तः [16]सत्री गृहपतिः समौ ॥
[17]लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥

१ द्वे अन्तःपुरचारिणो नपुंसकमात्रस्य । २ त्रीणि सेवकस्य । ३ एकं स्वदेशानन्तरदेशस्य राज्ञः । ४ एकं तदनन्तरेण व्यवहितस्य राज्ञः । ५ एकं शत्रुमित्राभ्यां परस्य राज्ञः । ६ एकं पश्चाद्वर्तमानस्य राज्ञः । ७ एकोनविंशतिः शत्रोः । ८ त्रयं तुल्यवयसः प्रियस्य । ९ त्रीणि मित्रस्य । १० द्वे मैत्र्याः । ११ द्वे आनुकूल्यस्य । १२ षट् चारस्य । १३ द्वे विश्वासपात्रस्य । १४ अष्टौ ज्यौतिषिकस्य । १५ द्वे शास्त्रवेत्तुः । १६ द्वे गृहस्थस्य । १७ चत्वारि लेखकस्य ।

[1]लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ ।
[2]स्यात्संदेशहरो दूतो [3]दूत्यं तद्भावकर्मणी ॥ १६ ॥
[4]अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।
[5]स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ १७ ॥
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ।
[6]सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥
षड्गुणाः शक्तयस्तिस्रः [7]प्रभावोत्साहमन्त्रजाः ॥
[8]क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥
स [9]प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् ॥
[10]सामदाने भेददण्डावित्युपायचतुष्टयम् ॥ २० ॥
[11]साहसं तु दमो दण्डः [12]साम सान्त्वमथो समौ ॥
[13]भेदोपजापावुपधा [14]धर्माद्यैर्यत्परीक्षणम् ॥ २१ ॥

---

१ चत्वारि लिखिताक्षरस्य । २ द्वे दूतस्य । ३ एकं दूतस्य भावे कर्मणि च । ४ पञ्च पान्थस्य । ५ एतानि सप्त राज्याङ्गानि । ६ एतत्षड्गुणाः । ७ एतास्तिस्रः शक्तयः । ८ त्रयं नीतिवेदिनामिति त्रिवर्गस्य । ९ द्वे प्रभावस्य । १० उपायानां चतुष्टयम् । ११ त्रीणि दण्डस्य । १२ द्वे सान्त्व इति ख्यातस्य । १३ द्वे संहतयोर्द्वैधीकरणस्य । १४ एवं राज्ञः धर्माद्यैरमात्यादेः परीक्षणस्य ।

पञ्च [1]त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः ।
[2]विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥ २१ ॥
रहश्चोपांशु चालिङ्गे [3]रहस्यं तद्भवे त्रिषु ।
समौ [4]विस्रम्भविश्वासौ [5]भ्रेषो भ्रंशो यथोचितात् २३
[6]अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् ।
[7]युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ २४ ॥
न्याय्यं च त्रिषु षट् [8]संप्रधारणा तु समर्थनम् ॥
[9]अववादस्तु निर्देशो निदेशः शासनं च सः ॥२५॥
शिष्टिश्चाज्ञा च [10]संस्था तु मर्यादा धारणा स्थितिः ।
[11]आगोऽपराधो मन्तुश्च समे [12]तुद्दानबन्धने ॥ २६ ॥
[13]द्विगाधो द्विगुणो दण्डो [14]भागधेयः करो बलिः ।

---

१ एकं द्वाभ्यामेव कृतस्य मन्त्रस्य । २ सप्त एकान्तस्य । ३ एवं रहोभवस्य । ४ द्वे विश्वासस्य । ५ एकं यथोचितभ्रंशादधः पतनस्य । ६ पञ्चकं नीतेः । ७ षट् न्यायागतस्य । ८ द्वे इदमुचितमेवेति निश्चयस्य । ९ षट् आज्ञायाः । १० चत्वारि न्यायपथस्थितेः । ११ त्रीण्यपराधस्य । १२ द्वे बन्धनस्य । १३ एकमपराधे याज्ञवी-मितदण्डद्विगुणस्य । १४ त्रीणि कर्षकादिभ्यो राजग्राह्यस्य ।

घट्टादिदेयं [1]शुल्कोऽस्त्री [2]प्राभृतं तु प्रदेशनम् ॥२७॥
उपायनमुपग्राह्यमुपहारस्तथोपदा ।
[3]यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २८ ॥
[4]तत्कालस्तु तदात्वं स्यादुत्तरः काल [5]आयतिः ।
[6]सांदृष्टिकं फलं सद्य [7]उदर्कः फलमुत्तरम् ॥ २९ ॥
[8]अदृष्टं वन्हितोयादि [9]दृष्टं स्वपर चक्रजम् ।
[10]महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३० ॥
[11]प्रक्रिया त्वधिकारः [12]स्याच्चामरं तु प्रकीर्णकम् ।
[13]नृपासनं यत्तद्भद्रासनं [14]सिंहासनं तु तत् ॥ ३१ ॥
हैमं [15]छत्रं त्वातपत्रं राज्ञस्तु [16]नृपलक्ष्म तत् ।
[17]भद्रकुम्भः पूर्णकुम्भो [18]भृङ्गारः कनकालुका ॥३२॥

---

१ एकं मद्यमूल इति ख्यातस्य । २ षट् गुरुपार्श्वादिदर्शनादौ समर्प्यमाणस्य वस्तुनः भेट नजर इत्याख्यस्य । ३ द्वे कन्यादानकाले मातुलकादौ च दीयमानद्रव्यस्य दहेज इति ख्यातस्य । ४ द्वे वर्तमानकालस्य । ५ एकमागामिकालस्य । एकं सद्यःफलस्य । ७ एकं भाविफलस्य । ८ एकं वन्ह्यादिकृतभयस्य । ९ एकं स्वपरराष्ट्रान्यचोरादिभयस्य १० एकं स्वपक्षराजजातभयस्य । ११ द्वे स्वस्वापकस्य । १२ द्वे चामरस्य । १३ द्वे पर्यङ्कादिनृपासनस्य । १४ एकं स्वर्णनिर्मितराजासनस्य । १५ एकं राजछत्रस्य । १७ द्वे घटस्य । १८ द्वे स्वर्णरचितपात्रविशेषस्य ।

[१]निवेशः शिबिरं षण्ढे [२]सज्जनं तूपरक्षणम् ।
[३]हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३३ ॥
[४]दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥ ३४ ॥
इभः स्तम्बेरमः पद्मी [५]यूथनाथस्तु यूथपः ।
[६]मदोत्कटो मदकलः [७]कलभः करिशावकः ॥ ३५ ॥
[८]प्रभिन्नो गर्जितो मत्तः [९]समावुद्वान्तनिर्मदौ ।
[१०]हास्तिकं गजता वृन्दे [११]करिणी धेनुका वशा ॥ ३६ ॥
गण्डः [१२]कटो [१३]मदो दानं [१४]वमथुः करशीकरः ।
[१५]कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये [१६]विदुः पुमान् ॥ ३७ ॥
[१७]अवग्रहो ललाटं स्यादीषिका [१८]त्वक्षिकूटकम् ।

---

१ द्वे सैन्यवासस्थानस्य । २ द्वे आगन्तुकसैन्यवासस्य । ३ एकं सेनाङ्गस्य । ४ पञ्चदश हस्तिनः । ५ द्वे यूथमुख्यस्य गजस्य । ६ द्वे मदोन्मत्तस्य । ७ द्वे करिशावकस्य । ८ त्रीणि प्रसृतमदस्य । ९ द्वे गतमदस्य । १० द्वे हस्तिसमूहस्य । ११ त्रीणि हस्तिन्याः । १२ एकं हस्तिकपोलस्य । १३ द्वे मदोदकस्य । १४ द्वे करिकरनिर्गतजलकणस्य । १५ एकं हस्तिशिरःपिण्डयोः । १६ एकं तयोर्मध्यस्य । १७ एकं गजललाटस्य । १८ द्वे नेत्रगोलकस्य ।

अपाङ्गदेशो [1]निर्याणं [2]कर्णमूलं तु चूलिका ॥ ३८ ॥
अधः कुम्भस्य [3]वाहित्थं [4]प्रतिमानमधोऽस्य यत् ।
[5]आसनं स्कन्धदेशः [6]स्यात्पद्मकं बिन्दुजालकम् ॥३९॥
पार्श्वभागः [7]पक्षभागो [8]दन्तभागस्तु योऽग्रतः ।
द्वौ पूर्वपश्चाज्जङ्घादिदेशौ [9]गात्रावरे क्रमात् ॥ ४० ॥
[10]तोत्रं [11]वेणुकमालानं बन्धस्तम्भेऽथ [12]शृङ्खला ।
अन्दुको [13]निगडोऽस्त्री स्यादङ्कुशोऽस्त्री सृणिः स्त्रियाम्
[14]दूष्या कक्ष्या वरत्रा [15]स्यात्कल्पना सज्जना समे ।
[16]प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥ ४० ॥
[17]वीतं त्वसारं हस्त्यश्वं [18]वारी तु गजबन्धनी ।
[19]घोटके वीति स्तुरगतुरङ्गाश्वतुरङ्गमाः ॥ ४३ ॥

---

१ एकं हस्त्यपाङ्गदेशस्य । २ एकं हस्तिकर्णमूलस्य । ३ एकं कुम्भस्याधोभागस्य । ४ एकं वाहित्थाधोभागदन्तयोर्मध्यस्य । ५ एकं गजस्कन्धदेशस्य । ६ एकं बिन्दुसमूहस्य । ७ एकं गजपार्श्वभागस्य । ८ एकं गजाग्रभागस्य । ९ एकैकं यथाक्रमं हस्तिनः पूर्वपश्चाज्जङ्घादिदेशयोः । १० द्वे तोत्रदण्डस्य । ११ एकं बन्धनाधारस्तम्भस्य । १२ श्रीणि शृङ्खलायाः । १३ द्वे अङ्कुशस्य । १४ त्रयं मध्यबन्धनोपयोगिन्याश्चर्मरज्ज्वाः । १५ द्वे नायकादेहरणार्थं गजसज्जीकरणे । १६ पञ्च गजपृष्ठवर्तिन आस्तरणस्य । १७ एकं युद्धानभिज्ञस्य हस्त्यश्वस्य । १९ त्रयोदश घोटकस्य ।

वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।
[1]आजानेयाः कुलीनाः [2]स्युर्विनीताः साधुवाहिनः ४४
[3]वनायुजाः पारसीकाः काम्बोजाः वाह्लिकाः हयाः ।
[4]ययुरश्वोऽश्वमेधीयो [5]जवनस्तु जवाधिकः ॥ ४५ ॥
[6]पृष्ठ्यः स्थौरी सितः [7]कर्को [8]रथ्यो वोढा रथस्य यः ।
बालः [9]किशोरो [10]वाम्यश्वा वडवा [11]वाडवं गणे ॥४६॥
[12]त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ।
[13]काश्यं तु मध्यमश्वानां [14]हेषा ह्रेषा च निःस्वनः ४७
[15]निगालस्तु गलोद्देशो वृन्दे [16]त्वश्वीयमाश्ववत् ।
आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥ ४८ ॥
गतयोऽमूः पञ्च [17]धारा घोणा [18]तु प्रोथमस्त्रियाम् ।

---

१ एकं प्रशस्तजातिमदश्वनाम् । २ एवं शोभनवाहकानाम् । ३ एकैकं तत्तद्देशजातानाम् । ४ एकमश्वमेधाय हितस्याश्वस्य । ५ एकं वेगेनाधिकस्याश्वस्य । ६ द्वे बलादिभारवाहकस्याश्वस्य । ७ एकं शुक्लाश्वस्य । ८ एकं रथस्य वोढुरश्वस्य । ९ एकमश्वपोतस्य । १० स्त्र्यश्वायाः । ११ एकं वडवासमूहस्य । १२ एकमश्वस्यैकादिनगमनमार्गस्य । १३ एकमश्वानां मध्यस्य । १४ द्वे अश्वशब्दस्य । १५ एकं गलस्कन्धसन्धे । १६ द्वे अश्वसमूहस्य । १७ एकैकमश्वानामास्कन्दितादिगतानाम् । १८ एकमश्वनासिकायाः ।

[१]कविकातु खलीनोऽस्त्री [२]शफं क्लीबे खुरः पुमान् ॥४९॥
[३]पुच्छोऽस्त्री लूमलाङ्गूले [४]वालहस्तश्च वालधिः ॥
[५]त्रिपूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५० ॥
याने चक्रिणि युद्धार्थे [६]शताङ्गः स्यन्दनो रथः ॥
असौ [७]पुष्यरथश्चक्रयानं न समराय यत् ॥ ५१ ॥
[८]कर्णीरथः प्रवहणं डयनं च समं त्रयम् ॥
[९]क्लीबेऽनःशकटोऽस्त्री[१०]स्याद्गन्त्री कम्बलिवाह्यकम् ॥ ५२ ॥
[११]शिबिका याप्ययानं [१२]स्याद्दोला प्रेङ्खादिका स्त्रियाम् ॥
उभौ तु [१३]द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५३ ॥
पाण्डुकम्बलसंवीतः स्यन्दनः [१४]पाण्डुकम्बली ॥
रथे [१५]काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥ ५४ ॥

---

१ द्वे लगाम इति ख्यातस्य । २ द्वे अश्वखुरस्य । ३ श्रोणिपुच्छस्य ४ द्वे केशसमूहयुक्तपुच्छाग्रभागस्य । ५ द्वे धमशान्त्यर्थं मुहुर्भुवि पार्श्वाभ्यां लुठिताश्वस्य । ६ त्रयं युद्धार्थं रथस्य । ७ एकमुत्सवादौ सुखेन भ्रमणार्थं क्रीडारथस्य । ८ त्रयं वाहनार्थं सुपरिष्कारविविहितरथस्य । ९ द्वे शकटस्य ( गाड़ी ) । १० । एवं लघुवाह्यशकटस्य । ११ द्वे पुरुषवाह्ययानस्य ( पालकी ) । १२ द्वे दोलायाः । १३ द्वयं व्याघ्रचर्मप्रावृतरथस्य । १४ एकं पाण्डुकम्बलप्रावृतरथस्य । १५ एकैकं कम्बलाद्यावृतरथस्य ।

त्रिषु द्वैपादयो [1]रथ्या रथकट्या रथव्रजे ॥
[2]धूः स्त्री क्लीबे यानमुखं [3]स्याद्रथाङ्गमपस्करः ॥५५॥
[4]चक्रं रथाङ्गं तस्यान्ते [5]नेमिः स्त्री स्यात्प्रधिः पुमान् ॥
[6]पिण्डिका नाभिरक्षाग्रकीलके तु [7]द्वयोराणिः ॥५६॥
[8]रथगुप्तिर्वरूथो ना [9]कूबरस्तु युगन्धरः ॥
[10]अनुकर्षो दार्वधःस्थं [11]प्रासङ्गो ना युगान्तरम् ॥५७॥
सर्वस्याद्वाहनं [12]यानं युग्यं पत्रं च धोरणम् ॥
परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ ५८ ॥
[13]आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ॥
[14]नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ५९
सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ॥

---

१ द्वयं रथसमूहे। २ द्वे रथाग्रभागस्य। ३ द्वे रथावयवमात्रस्य। ४ द्वे चक्रस्य। ५ द्वे चक्रस्यान्तभूस्पर्शिभागस्य। ६ द्वे चक्रकाष्ठाधारभूतमध्यावयवस्य। ७ एकं नाभिक्षेपकाष्ठाधारणार्थकीलकस्य। ८ द्वे शस्त्रादिभ्यः परिरक्षणार्थं लोहादिमयावरणस्य। ९ द्वे भारबन्धनकाष्ठस्य। १० एकं यस्य धः स्थलभागदारुणः। ११ एकं हयादिस्कन्धे आसज्यमानकाष्ठस्य। १२ चत्वारि वाहनस्य। १३ चत्वारि हस्तिपकस्य ( माहुत ) १४ अष्टौ सारथेः।

[१]रथिनः स्यन्दनारोहा [२]अश्वारोहास्तु सादिनः ॥६०॥
[३]भटा योधाश्च योद्धारः [४]सेनारक्षास्तु सैनिकाः ॥
सेनायां समवेता ये [५]सैन्यास्ते सैनिकाश्च ते ॥ ६१ ॥
बलिनो ये सहस्रेण [६]साहस्रास्ते सहस्रिणः ॥
[७]परिधिस्थः परिचरः [८]सेनानीर्वाहिनीपतिः ॥ ६२ ॥
[९]कञ्चुको वारबाणोऽस्त्रियत्तु मध्ये सकञ्चुकाः ॥
बध्नन्ति [१०]तत्सारसनमधिकाङ्गोऽथ [११]शीर्षकम् ॥६३॥
शीर्षण्यं च शिरस्त्रेऽथ [१२]तनुत्रं वर्म दंशनम् ॥
उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥ ६४ ॥
[१३]आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ॥
[१४]संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥ ६५ ॥
त्रिष्वामुक्तादयो वर्मभृतां [१५]कावचिकं गणे ॥

---

१ द्वे रथिनः । २ द्वे सवार इति ख्यातस्य । ३ त्रयं योद्धुः । ४ द्वे सेनारक्षकाणाम् । ५ द्वे सैनिकानाम् । ६ द्वे सहस्रसंख्याकस्य भटवतः । ७ द्वे सेनानियन्तुः समन्तात्परस्य । ८ द्वे सेनापतेः । ९ द्वे चमाद्दकस्य वारबाणादेः । १० द्वे चोलकाप्रतिबन्धकस्य । ११ त्रीणि टोप इति ख्यातस्य । १२ षट्कं कवचस्य । १३ चत्वारि परिहितकञ्चुकादेः । १४ पञ्च कवचभृतः । १५ एकं कवचिसमूहस्य ।

[1]पदाति पत्तिपदग पादातिक पदाजयः ॥ ६६ ॥
पदगश्च पदिकश्चाऽथ [2]पादातं पत्तिसंहतिः ॥
[3]शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥
[4]कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ॥
[5]अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ॥ ६८ ॥
[6]धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः ॥
[7]स्यात्काण्डवांस्तु काण्डीरः [8]शाक्तीकःशक्तिहेतिकः६९
[9]याष्टीकपारश्वधिकौ यष्टिपार्श्वधहेतिकौ ॥
[10]नैस्त्रिंशिकोऽसिहेतिः स्यात्समौ [11]प्रासिककौन्तिकौ ॥
[12]चर्मी फलकपाणिः स्यात्पताकी वैजयन्तिकः ॥
[14]अनुप्लवः सहायश्चानुचरोऽभिसरः समाः ॥ ७१ ॥
[15]पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः ॥

---

१ सप्त पदातेः । २ एकं पदातिसमूहस्य । ३ चत्वारि आयुधजीविनः । ४ त्रीणि शरनिक्षेपनिष्णातस्य । ५ एकं वेधाच्च्युतसायकस्य । ६ षट् धनुर्धरस्य । ७ द्वे बाणधारिणः । ८ द्वे शक्त्यायुधस्य । ९ एकं क्रमात् लाठवाल इति फरसावाला इति च ख्यातस्य । १० एकं खड्गायुधस्य । ११ एकैकं प्रासायुधहेतिकस्य कुन्तहेतिकस्य च १२ द्वे चर्मधारिणः । १३ द्वे पताका बिभ्रतः । १४ चत्वारि अनुचरस्य । १५ षट् पुरोगामिनः ।

पुरोगमः पुरोगामी [1]मन्दगामी तु मन्थरः ॥ ७२ ॥
[2]जङ्घालोऽतिजवस्तुल्यौ [3]जङ्घाकरिकजाङ्घिकौ ॥
[4]तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥
[5]जय्यो यः शक्यते जेतुं जेयो [6]जेतव्यमात्रके ॥
[7]जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति ॥ ७४ ॥
[8]सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ॥
ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ॥ ७५ ॥
[9]स्यादुरस्वानुरसिलो [10]रथिनो रथिको रथी ॥
[11]कामंगाम्यनुकामीनो [12]ह्यत्यन्तीनस्तथा भृशम् ७६
[13]शूरो वीरश्च विक्रान्तो [14]जेता जिष्णुश्च जित्वरः ॥
[15]सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ॥ ७७ ॥
[16]ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ॥

---

१ द्वे अग्रगामिनः । २ द्वयमतिवेगवतः । ३ द्वयं जङ्घाबलेनजीवितस्य । ४ षट्कं त्वरितस्य । ५ एकं यो जेतुं शक्यते तस्य । ६ एकं जेतव्यमात्रके । ७ द्वे जेतुः ८ शत्रुमभिमुखं सामर्थ्येन योद्धुं गच्छति तस्य । ९ द्वे विशालवक्षसः । १० त्रीणि रथवाहिनः । ११ एकं यथेष्टगमनशीलस्य । १२ एकमत्यर्थं गमनशीलस्य । १३ त्रीणि शूरस्य । १४ त्रीणि जयनशीलस्य । १५ एकं युद्धकुशलस्य । १६ एकादश सेनायाः ।

वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥७८॥
[1]व्यूहस्तु बलविन्यासो [2]भेदा दण्डादयो युधि ॥
[3]प्रत्यासारो व्यूहपार्ष्णिः [4]सैन्यपृष्ठे प्रतिग्रहः ॥७९॥
एकेभैकरथा त्र्यश्वा [5]पत्तिः पञ्चपदातिका ॥
पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८० ॥
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ॥
अनीकिनी दशानीकिन्यक्षौ[6]हिण्यथ संपदि[7] ॥८१॥
संपत्तिः श्रीश्च लक्ष्मीश्च [8]विपत्त्यां विपदापदौ ॥
[9]आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ॥ ८२ ॥
[10]धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ॥
इष्वासोऽप्यथ कर्णस्य [11]कालपृष्ठं शरासनम् ॥८३॥
कपिध्वजस्य [12]गाण्डीवगाण्डिवौ पुन्नपुंसकौ ॥

---

१ एकं व्यूहस्य । तल्लक्षणं तु "मुखे रथा हयाः पृष्ठे तत्पृष्ठे च पदातयः । पार्श्वयोश्च गजाः कार्या व्यूहोऽयं परिकीर्तितः इति । २ व्यूहस्य भेदा इत्यर्थः । ३ द्वे व्यूहपश्चाद्भागस्य । ४ द्वे सेनायाः पश्चाद्भागस्य । ५ एकं पत्तेः । पत्तेरुपर्युपरि त्रिगुणपर्योत्तरं क्रमात्सेनामुखादय आख्या स्युः । ६ प्रमाणं भारते "अक्षौहिण्याः प्रमाणं तु खाङ्गाष्टैकद्विकैर्गजैः । रथैरेतैर्हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभिः" इति । चत्वारि संपदः । ८ त्रीणि आपदः । ९ चत्वारि शस्त्रमात्रस्य । १० षट् धनुषः । ११ एकं कर्णस्य धनुषो । १२ द्वे अर्जुनस्य धनुषः ॥

कोटिरस्याटनी [2]गोधातले ज्याघातवारणे ॥ ८७ ॥
[3]लस्तकस्तु धनुर्मध्यं [4]मौर्वी ज्या शिञ्जिनी गुणः ॥
[5]स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥८६॥
[6]लक्षं लक्ष्यं शरव्यं च [7]शिराभ्यास उपासनम् ॥
[8]पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥
कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ॥
[9]प्रक्ष्वेडनास्तु नाराचाः [10]पक्षो वाजस्त्रिपूत्तरे ॥८७॥
[11]निरस्तः प्रहिते बाणे [12]विषाक्ते दिग्धलिप्तकौ ॥
[13]तूणोपासङ्गतूणीर निषङ्गा इषुधिर्द्वयोः ॥ ८८ ॥
तूण्यां [14]खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ॥
कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ॥ ८९ ॥
[15]त्सरुः खड्गादिमुष्टौ [16]स्यान्मेखला तन्निबन्धनम् ॥
[17]फलकोऽस्त्री फलं चर्म [18]संग्राहो मुष्टिरस्य यः ॥९०॥

---

१ धनुषः प्रान्ते । २ द्वे ज्याघातवारणस्य । ३ एकं धनुर्मध्यस्य । ४ चत्वारि धनुर्गुणस्य । ५ शरक्षेपकाले धनुर्धराणां स्थितिभेदाः । ६ त्रीणि वेध्यस्य । ७ द्वे शराभ्यासस्य । ८ द्वादश बाणस्य । ९ द्वे लोहमयबाणस्य । १० द्वे शरपक्षस्य । ११ एकं प्रक्षिप्तेषोः । १४ नव खड्गस्य । १५ एकं खड्गमुष्टेः । १६ एकं खड्गमुष्टिबन्धनस्य । १७ त्रीणि ढालडरि इति ख्यातस्य । १८ एकं फलकमुष्टेः ।

[1]द्रुघणो मुद्गरघनौ [2]स्यादीली करवालिका ॥
भिन्दिपालः सृगस्तुल्यौ [3]परिघः परिघातिनः ॥९३॥
द्वयोः [5]कुठारः स्वधितिः परशुश्च परश्वधः ॥
[6]स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥९२॥
वा पुंसि [7]शल्यं शङ्कुर्ना [8]शर्वला तोमरोऽस्त्रियाम् ॥
[9]प्रासस्तु कुन्तः [10]कोणस्तु स्त्रियः पाल्यश्रिकोटयः ९३
[11]सर्वाभिसारः सर्वौघः सर्वसन्नाहनार्थकः ॥
[12]लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥९४॥
यत्सेनयाभिगमनमरौ [13]तदभिषेणनम् ॥
[14]यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः ॥९५॥
[15]स्यादासारः प्रसरणं [16]प्रचक्रं चलितार्थकम् ॥

---

१ त्रीणि मुद्गरस्य गुर्जो ) २ द्वे हस्वखड्गाकृतेरेकधारशस्त्रस्य ( तल्वार, गुप्ति ) । ३ द्वे गोफण इति ख्यातस्य । ४ द्वे लोहबद्धहस्तप्रमाणमुद्गरस्य [ लाठीखा ] ५ चत्वारि कुठारस्य । ६ चत्वारि छुरिकायाः । ७ द्वे बाणाग्रस्य ( ना, बर्छी ति ख्यातस्य ] ८ द्वे मन्यदण्डाकारशस्त्रभेदस्य ( गड़ाझा ) ९ द्वे भाला इति ख्यातस्य । १० चत्वारि खड्गादिप्रान्तभागस्य । ११ त्रीणि चतुरङ्ग सैन्यसन्नाहस्य । १२ एक-मश्वयुक्त्यां नीराजनसंज्ञके राज्ञादिसमर्पणलक्षणविधेः । १३ एकं शत्रुसमीपे सेनया युक्ताभिगमस्य । १४ षट्कं प्रयाणस्य । १५ द्वे सैन्यस्य सर्वतो व्याप्तेः । १६ द्वे प्रस्थितसैन्यस्य ।

अहितान्प्रत्यभीतस्य रणे [1]यानमभिक्रमः ॥ ९६
[2]वैतालिका [3]बोधकराश्चाक्रिका घाण्टिकाऽर्थकाः ।
[4]स्युर्मागधास्तु मगधा [5]बन्दिनः स्तुतिपाठकाः ॥
[6]संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ॥
[7]रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः ॥
[8]चूर्णे क्षोदः [9]समुत्पिञ्जपिञ्जलौ भृशमाकुले ॥
[10]पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ॥ ९
सा [11]वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा ॥
अहं पूर्वमहं [12]पूर्वमित्यहं पूर्विका स्त्रियाम् ॥ १०
[13]आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि ॥
[14]अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः ॥
[15]द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ॥

१ एकं रणे शत्रून् प्रति निर्भयस्य गमनस्य । २ द्वे । ३ प्रातर्बोधयन्ति तेषाम् । ३ द्वे बन्दिविशेषेषु ( घण्टियारि ) ४ द्वे मगधवर्णकानाम् । ५ द्वे राजादिस्तुतिपाठकेषु [ भाट ] । ६ एकं पराङ्मुखानाम् । ७ चत्वारि धूल्याः । ८ द्वे पिष्टस्य रजसः । ९ द्वे व्याकुले । १० चत्वारि पताकायाः । ११ एकमतिभयदयुद्धभूमेः । १ अहमीत्याहपुरः सर्वपुरुषस्य । १३ एकमहङ्कारवतो भावस्य परस्परमहं करोऽहं इत्य हङ्कारस्य । १५ दश पराक्रमस्य ।

शक्तिः पराक्रमः प्राणो [1]विक्रमस्त्वतिशक्तिता ॥१०१॥
[2]वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे ॥
[3]युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥
मृधमास्कन्दनं संख्यं [4]समीकं सांपरायिकम् ॥
अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥ १०४ ॥
संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥
अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः ॥ १०५ ॥

अहितान्प्रत्यभीतस्य रणे [1]यानमभिक्रमः ॥ ९६ ॥
[2]वैतालिका [3]बोधकराश्चाक्रिका घाण्टिकाऽर्थकाः ॥
[4]स्युर्मागधास्तु मगधा [5]बन्दिनः स्तुतिपाठकाः ॥९७॥
[6]संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ॥
[7]रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ॥९८॥
[8]चूर्णे क्षोदः [9]समुत्पिञ्जपिञ्जलौ भृशमाकुले ॥
[10]पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ॥९९॥
सा [11]वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा ॥
अहं पूर्वमहं [12]पूर्वमित्यहं पूर्विका स्त्रियाम् ॥१००॥
[13]आहोपुरुषिका दर्पाद्या स्यात्सम्भावनात्मनि ॥
[14]अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः ॥
[15]द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्म च ॥

---

१ एकं रणे शत्रून् प्रति निर्भयस्य गमनस्य । २ द्वे ये नृपान् स्तुतिपाठेन प्रातर्बोधयन्ति तेषाम् । ३ द्वे बन्दिविशेषेषु ( घण्टियारी ) ४ द्वे राजाग्रतो वंशक्रमस्तावकानाम् । ५ द्वे राजादिस्तुतिपाठकेषु [ भाट ]। ६ एकं शपथात्संग्रामादपरावृत्तानाम् । ७ चत्वारि धूल्याः । ८ द्वे पिष्टस्य रजसः । ९ द्वे अत्यन्ताकुले सैन्ये । १० चत्वारि पताकायाः । ११ एकमतिभयदयुद्धभूमेः । १२ एकम् अहम् अग्रगामी स्यामहं पूर्वः सर्वसैन्ययुद्धस्य । १३ एकमहङ्कारवतो भावस्य । १४ एकं परस्परमहं शक्तोऽहं शक्त इत्यहङ्कारस्य । १५ दश पराक्रमस्य ।

शक्तिः पराक्रमः प्राणो [१]विक्रमस्त्वतिशक्तिता ॥१०२॥
[२]वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे ॥
[३]युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥
मृधमास्कन्दनं संख्यं समीकं सांपरायिकम् ॥
अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥ १०४ ॥
संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥
अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः ॥ १०५ ॥
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ॥
[४]नियुद्धं बाहुयुद्धेऽथ [५]तुमुलं रणसंकुले ॥१०६॥
[६]क्ष्वेडा तु सिंहनादः स्यात्करिणां घटना [७]घटा ॥
[८]क्रन्दनं योधसंरावो [९]बृंहितं करिगर्जितम् ॥१०७॥
[१०]विस्फारो धनुषः स्वानः [११]पटहाडम्बरौ समौ ॥
[१२]प्रसभं तु बलात्कारो हठोऽथ [१३]स्खलितं छलम् १०८

१ द्वे अतिपराक्रमस्य । २ एकं वृत्ते रणे यमयान्मयं भवति भविष्यत्तु शाद्र- पूर्वमपि वीराणां मद्यपानस्य । ३ एकं त्रिंशद् युद्धस्य ४ द्वे बाहुयुद्धस्य । ५ एकं रणस्य शस्त्रसम्पाते । ६ वीराणां सिंहवदुत्थनादस्य । ७ एकं युद्धे संघटनस्य । ८ एकं योधानामाक्रोशपूर्वशब्दस्य । ९ एकं करिगर्जितस्य । १० एकं धनुः- शब्दस्य । ११ द्वे संग्रामध्वनेः [दमदमा] । १२ त्रीणि बलात्कारस्य । १३ एकं पुनर्भङ्गादारबस्य ।

[1]अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ॥
[2]मूर्च्छा तु कश्मलं [3]मोहोऽप्यवमर्दस्तु पीडनम् १०९
[4]अभ्यवस्कन्दनं त्वभ्यासादनं [5]विजयो जयः ॥
[6]वैरशुद्धिः प्रतीकारो वैरनिर्यातनञ्च सा ॥ ११० ॥
[7]प्रद्रावोद्द्रावसन्द्रावसंद्रावा विद्रवो द्रवः ॥
अपक्रमोऽपयानञ्च रणे भङ्गः पराजयः ॥ १११ ॥
[9]पराजितपराभूतौ त्रिषु [10]नष्टतिरोहितौ ॥
[11]प्रमापनं निबर्हणं निकारणं विशारणम् ॥११२॥
प्रवासनं परासनं निषूदनं निहिंसनम् ।
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥ ११३ ॥
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥
निर्वापणं विशसनं मारणं प्रतिघातनम् ॥ ११४ ॥
उद्वासनप्रमथनक्रथनोज्जासनानि च ॥

---

१ भयमुत्पातस्य । २ त्रीणि मूर्च्छायाः । ३ द्वे सत्त्वादिसंपन्नदेहस्य परच-क्रेण पीडनस्य । ४ द्वे छलादाक्रमणस्य । ५ द्वे जयस्य । ६ त्रीणि वैरप्रतीकारस्य । अष्टौ पलायनस्य । ८ एकं रणे भङ्गस्य । ९ द्वे निर्जितस्य । १० द्वे निलीनस्य । ११ त्रिंशद्वधस्य ।

आलम्भपिञ्जविशरघातोन्माथवधा अपि ॥ ११५ ॥
[1]स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥११६॥
[2]परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ।
मृतप्रमीतौ त्रिष्वेते [3]चिता चित्या चितिः स्त्रियाम् ११७
[4]कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ।
[5]श्मशानं स्यात्पितृवनं [6]कुणपः शवमस्त्रियाम् ॥११८॥
[7]प्रग्रहोपग्रहौ बन्द्यां [8]कारा स्याद्बन्धनालये ।
पुंसि [9]भूम्न्यसवः प्राणाश्चैवं [10]जीवोऽसुधारणम् ११९॥
[11]आयुर्जीवितकालो ना [12]जीवातुर्जीवनौषधम् ।

॥ इति क्षत्रियवर्गः ॥ ८ ॥

[13]ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ।
[14]आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ॥ १ ॥

स्त्रियां [1]कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ।
सेवा [2]श्ववृत्ति[3]रनृतं कृषिरुञ्छशिलं [4]त्वृतम् ॥ २ ॥
द्वे याचितायाचितयोर्यथासंख्यं [5]मृतामृते ।
[6]सत्यानृतं वणिग्भावः [7]स्यादृणं पर्युदञ्चनम् ॥ ३ ॥
[8]उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ।
याच्ञयाप्तं [9]याचितकं [10]निमयादापमित्यकम् ॥ ४ ॥
[11]उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।
[12]कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ॥ ५ ॥
[13]क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः ।
क्षेत्रं [14]व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥
यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि यत् ।
[15]तिल्यं तैलीनवन्माषोमाणु भङ्गा द्विरूपता ॥ ७ ॥

---

[1] चत्वारो वृत्तयो जीविकाभेदाः । [2] एकं परचित्तानुवर्तनस्य । [3] एकं कर्षणस्य । [4] एकम् उञ्छशिलस्य । [5] एकैकं क्रमाद्याचितायाचितयोः । [6] एकं वाणिज्यस्य । [7] त्रयं ऋणस्य । [8] त्रीणि व्याज इति ख्यातस्य । [9] एकं याच्ञया यत्प्राप्तं तस्य । [10] एकं परावर्तादाप्तस्य । [11] एकैकं क्रमादृणदातुर्ऋणग्रहीतुश्च । [12] चत्वारि वृद्ध्या जीविनः पुरुषस्य । [13] चत्वारि कृषीवलस्य । [14] एकैकं व्रीह्याद्युत्पत्तियोग्यक्षेत्रस्य । [15] त्रीणि तिलाद्यर्थं भवने क्षेत्रे । तिल्यं तैलीनवन्माषादेः [illegible] द्विरूपतास्यात् ।

मौद्गीनकौद्रवीणादिशेषधान्योद्भवक्षमम् ।
( शाकक्षेत्रादिके [1]शाकशाकटं शाकशाकिनम् । )
[2]बीजाकृतं तूप्तकृष्टे सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥
[4]त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ।
[5]द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥
द्रोणाढकादिवापादौ [6]द्रौणिकाढकिकादयः ।
खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥ १० ॥
[7]पुमान्पुमकयोर्वप्रः केदारः क्षेत्रमस्य तु ।
[8]कैदारकं स्यात्कैदार्यं क्षेत्रं कैदारिकं गणे ॥ ११ ॥
[9]लोष्ठानि लेष्ठवः पुंसि [10]कोटिशो लोष्ठभेदनः ।
[11]प्राजनं तोदनं तोत्रं [12]खनित्रमवदारणे ॥ १२ ॥
[13]दात्रं [14]लवित्रमाबन्धो योत्रं योक्त्रमथो [15]फलम् ।

---

१ द्वे शाकक्षेत्रादिकस्य । २ एकमादौ उप्तं पश्चात्कृष्टं क्षेत्रं तस्य । ३ त्रीणि हलकृष्टमात्रस्य । ४ चत्वारि वारत्रयकृष्टस्य । ५ सर्वपूर्वं योज्यमारभ्य शम्बाकृतमपि द्विगुणाकृतस्यैव । ६ एकैकं तत्तन्मानपरिमितवापक्षेत्रस्य । ७ त्रीणि क्षेत्रस्य । ८ चत्वारि क्षेत्रसमूहस्य । ९ द्वे मृत्तिकाखण्डस्य । १० द्वे लोष्टभेदनमुद्गरस्य । ११ त्रीणि चाबुकइति ख्यातस्य । १२ द्वे कुद्दाल इ० । १३ द्वे लवित्रस्य ( कोयत ) १४ त्रीणि युगबन्धनोरयोर्मिन्यां रज्जौ । १५ पञ्च फालस्य ।

निरीशं कुटकं फालः कृषको १लाङ्गलं हलम् ॥ १३ ॥
गोदारणं च सीरोऽथ २शम्या स्त्री युगकीलकः ।
३ईषा लाङ्गलदण्डः ४स्यात्सीता लाङ्गलपद्धतिः ॥ १४ ॥
पुंसि मेधिः ५खले दारु न्यस्तं यत्पशुबन्धने ।
६आशुर्व्रीहिः पाटलः ७स्याच्छितशूकयवौ समौ ॥ १५ ॥
तोक्मस्तु तत्र हरिते ९कलायस्तु सतीनकः ।
हरेणुरेणुकौ चास्मिन् १०कोरदूषस्तु कोद्रवः ॥ १६ ॥
११मङ्गल्यको मसूरोऽथ १२मकुष्टकमयुष्टकौ ।
वनमुद्गे १३सर्षपे तु द्वौ तन्तुभकदम्बकौ ॥ १७ ॥
१४सिद्धार्थस्त्वेष धवलो १५गोधूमः सुमनः समौ ।
१६स्याद्यावकस्तु १७कुल्माषश्चणको हरिमन्थकः ॥ १८ ॥
द्वौ तिले १८तिलपेजश्च तिलपिञ्जश्च निष्फले ।

---

१ चत्वारि हलस्य । २ द्वे युगकीलस्य शोल इत्याख्यातस्य । ३ एकं लाङ्गलदण्डस्य (हरिस) । ४ एकं हलरचितरेखायाः सीता इत्याख्यातायाः । ५ द्वे खले धान्यादिबन्धननिमित्ते । ६ अयं मेढिः । ७ द्वे जड इति ख्यातस्य । ८ एकं निःशूकयवस्य । ९ चत्वारि वाटाणा इति ख्यातस्य । १० द्वे कोद्रवस्य । ११ द्वे मसूर इति ख्यातस्य । १२ त्रीणि मठ इति ख्यातस्य । १३ अथ. सर्षों इति ख्यातस्य । १४ एकं धवलसर्षपस्य । १५ द्वे गोधूमस्य (गेहूं) । १६ एकं अर्धस्विन्नस्य यवादेः । १७ द्वे चणकस्य । १८ द्वे निष्फलतिले ।

[1]क्षवः क्षुताभिजननो राजिका कृष्णिकाऽऽसुरी ॥१९॥
स्त्रियौ [2]कङ्गुप्रियङ्गू द्वे [3]अतसी स्यादुमा क्षुमा ।
[4]मातुलानी तु भङ्गायां [5]व्रीहिभेदस्त्वणुः पुमान् ॥२०॥
[6]किंशारुः सस्यशूकं [7]स्यात्कणिशं सस्यमञ्जरी ।
[8]धान्यं व्रीहिः स्तम्बकरिः [9]स्तम्बो गुच्छस्तृणादिनः २१
[10]नाडीनालं च काण्डोऽस्य [11]पलालोऽस्त्री स निष्फलः ।
[12]कडङ्गरो बुसं क्लीबे धान्यत्वचि [13]तुषः पुमान् ॥२२॥
[14]शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे [15]शमी शिम्बा त्रिषूत्तरे
[16]ऋद्धमावसितं धान्यं [17]पूतं तु बहुलीकृतम् ॥ २३ ॥
माषादयः [18]शमीधान्ये [19]शूकधान्ये यवादयः ।
मुद्गोमाषो राजमाषःकुलित्थश्चणकस्तिलः ।
कालायस्तुवरइतिशमीधान्यगणःस्मृतः ॥

---

१ पञ्च राजसर्षपाख्यस्य ( राई ) २ द्वे प्रियङ्गोः ( काङ्गु ) ३ । अयं आलस इति ख्यातस्य । ४ द्वे भंगायाः ( भांग ) ५ एकं व्रीहिभेदस्य ६ एकं सस्यस्य सूचिवृत्याद्यस्य । ७ एकंधान्यस्य । निर्गतनूतन शिखः । ८ अयं व्रीहियवादेः । ९ एकं तृणयवादेर्नालादिगुच्छस्य । १० द्वे गुच्छकाण्डस्य ११ एकं निष्फलकाण्डस्य ( पोल ) १२ द्वे धान्यादिचूर्णस्य ( भूसा ) १३ एकं धान्यादेस्त्वचि ( भूस ) । १४ एकं यवादेः सूच्यग्रस्य । १५ द्वे छिमि इति ख्यातस्य । १६ द्वे निस्तृणराशीकृतधान्यस्य । १७ द्वे निस्तुषधान्यस्य । १८ "मुद्गो माषो राजमाषः कुलित्थश्चणकस्तिलः । कालायस्तुवर इति शमीधान्यगणस्य इत्येकम्) १९ एकं यवगोधूमादीनाम् ।

[1]शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥२४॥
[2]तृणधान्यानि नीवाराः स्त्री [3]गवेधुर्गवेधुका ।
[4]अयोग्रं मुसलोऽस्त्री [5]स्यादुलूखलमुलूखलम् ॥ २५ ॥
[6]प्रस्फोटनं शूर्पमस्त्री [7]चालनी तितउः पुमान् ।
[8]स्यूतप्रसेवौ [9]कण्डोलपिटौ [10]कटकिलिञ्जकौ ॥२६॥
समानौ [11]रसवत्यां तु पाकस्थानमहानसे ।
[12]पौरोगवस्तदध्यक्षः [13]सूपकारास्तु बल्लवाः ॥ २७ ॥
आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।
[14]आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥ २८ ॥
[15]अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।
[16]अंगारधानिकाऽङ्गारशकट्यपि हसन्त्यपि ॥ २९ ॥
हसन्यप्यथ स्त्री [17]स्यादङ्गारोऽलातमुल्मुकम् ।

---

एकं कलमादीनाम्। [2] एकं नीवारश्यामाकादीनाम्। [3] द्वे मुन्यन्नविशेषस्य। [4] द्वे मुसलस्य। [6] द्वे शूर्पस्य। [7] द्वे चालन्य (चालनी)। [8] द्वे धान्यादिभरणार्थं स्यूतप्रसेवकस्य। [9] द्वे वंशदलादिरचितभाण्डस्य। [10] द्वे वंशादिविकारस्य। [11] त्रीणि पाकस्थानस्य। [12] एकं पाकस्थानाध्यक्षस्य। [13] सप्त पाककर्तुः (रसोइदार)। [14] त्रीणि भक्ष्यकारस्य। [15] पञ्च चुल्ले। [16] चत्वारि अङ्गारशकट्याः (बोरसी)। [17] त्रीणि प्रज्वलत्काष्ठस्य।

[1]क्लीबेऽम्बरीषं भ्राष्ट्रो न [2]कन्दुर्वा स्वेदनी स्त्रियाम् ॥
[3]अलिञ्जरः स्यान्मणिकः [4]कर्कर्यालुर्गलन्तिका ॥
[5]पिठरः स्थाल्युखा कुण्डं [6]कलशस्तु त्रिषु द्वयोः ॥३१॥
घटः कुटनिपावस्त्री [7]शरावो वर्धमानकः ॥
[8]ऋजीषं पिष्टपचनं [9]कंसोऽस्त्री पानभाजनम् ॥ ३२ ॥
[10]कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा [11]कुतुपः पुमान् ॥
[12]सर्वमावपनं भाण्डं पात्रामत्रं च भोजनम् ॥ ३२ ॥
[13]दर्विः कम्बिः खजाका च [14]स्यात्तर्दूर्दारुहस्तकः ॥
अस्त्री [15]शाकं हरितकं शिग्रुरस्य तु नाडिका ॥ ३४ ॥
[16]कलम्बश्च कडम्बश्च [17]वेसवार उपस्करः ॥
[18]तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥ ३५ ॥

---

१ द्वे चणकादिभर्जनपात्रस्य । २ द्वे पक्वान्ननिर्माणोपयोगिनः ( कड़ाही ) । ३ द्वे महाकुम्भस्य ( माठ ) । ४ त्रयं तण्डुलादिप्रक्षालनोदकगलन्या ( करवनी । ५ चत्वारि स्थाल्याः । ६ चत्वारि कलशस्य । ७ द्वे पिष्टपाकोपयोगिन पात्रस्य (तावा ) ९ द्वे पानपात्रस्य । १० एकं तैलघृतादिपात्रस्य, डिब्बा इति ख्यातस्य । ११ एकं छोटिडिब्बिया इति ख्यातस्य । १२ पञ्च भोजनस्य । १३ त्रयं दर्व्याः ( करछुली ) १४ द्वे दर्वीभेदस्य । १५ त्रयं वास्तुकादेः शाकस्य । १६ द्वे अस्य शाकस्य नालस्य १७ द्वे शाकादिसंस्कारार्थं रचितहरिद्रासर्षपमरीचादिचूर्णस्य । १८ त्रय तिन्तिडीकस्य ( चूक अथवा इमिली ।

मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम् ॥
जीरको जरणोऽजाजी कणा कृष्णे तु जीरके ॥ ३६ ॥
सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका ॥
आर्द्रकं शृङ्गवेरं स्यादथ छत्रा वितुन्नकम् ॥ ३७ ॥
कुस्तुम्बुरु च धान्याकमथ शुण्ठी महौषधम् ॥
स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ३८ ॥
आरनालकसौवीरकुल्माषाभिषुतानि च ॥
अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके ॥३९॥
सहस्रवेधि जतुकं वाह्लीकं हिङ्गु रामठम् ॥
तत्पत्त्री कारवी पृथ्वी वाष्पिका कवरी पृथुः ॥४०॥
निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी ॥
सामुद्रं यत्तु लवणमक्षीबं वशिरं च तत् ॥ ४१ ॥
सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे ॥

---

[1]रौमकं [2]वसुकं पाक्यं विडञ्च कृतके द्वयम् ॥
[3]सौवर्चलेऽक्षरुचके [4]तिलकं तत्र मेचके ॥
[5]मत्स्यण्डी फाणितं खण्डविकारे [6]शर्करा सिता ॥४३॥
[7]कूर्चिका क्षीरविकृतिः [8]स्याद्रसाला तु मार्जिता ॥
दध्नासहपयः पक्वं यत्तस्याद्दधिकूर्चिका ।
तक्रेणपक्वं यत्क्षीरं साभवेत्तक्रकूर्चिका ॥
[9]स्यात्तेमनन्तु निष्ठानं त्रिलिङ्गा वासितावधः ॥ ४४ ॥
शूलाकृतंभटित्रं स्याच्छूल्यमुख्यन्तु पैठरम् ॥
[12]प्रणीतमुपसंपन्नं [13]प्रयस्तं स्यात्सुसंस्कृतम् ॥ ४५ ॥
[14]स्यात्पिच्छिलं तु विजिलं [15]संमृष्टं शोधितं समे ॥
[16]चिक्कणं मसृणं स्निग्धं तुल्ये [17]भावितवासिते ॥४६॥
[18]आपक्वं पौलिरभ्यूषो [19]लाजाः पुम्भूम्नि चाक्षताः ॥

१ द्वे शाम्भरलवणस्य । २ द्वे बालानिमक इति ख्यातस्य । ३ त्रीणि मधुरलवणस्य, लवणभेदस्य । ४ एकं कृष्णवर्णसौवर्चले । ५ द्वे गाव इति ख्यातस्य । ६ त्रीणि शर्करायाः [ चिनी ] । ७ एकं "दध्ना सहपयः पक्वं यत्तत्स्याद्दधिकूर्चिका । तक्रेण पक्वं यत्क्षीरं सा भवेत्तक्रकूर्चिका,, । इति [ मावा ] । ८ द्वे श्रीखण्ड, सिखरण इति ख्यातस्य । ९ द्वे कढ़ी इति ख्यातस्य । १० अयं शूलसंस्कृतमांसादेः । ११ द्वे स्थाल्यां संस्कृतस्यान्नादेः । १२ द्वे रसादिसंपन्नव्यञ्जनादेः । १३ प्रयत्ननिष्पन्न घृतपक्वादेः । १४ द्वे मण्डयुक्तदध्यादेः । १५ द्वे कैशकीटादि अपनयनेनशोधितस्यान्नादेः । १६ द्वे पुष्पादिद्रव्यान्तरेणाधिवासितस्य । हरितयवादेर्भर्जितस्य । १९ एकं भर्जितव्रीहीणाम् ( लावा ) ।

१पृथुकः स्याच्चिपिटको २धाना भ्रष्टयवे स्त्रियः ॥ ४७ ॥
३पूपोऽपूपः पिष्टकः ४स्यात्करम्भो दधिसक्तवः ॥
५भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः ॥४८॥
६भिस्सटा दग्धिका सर्वरसाग्रे ७मण्डमस्त्रियाम् ॥
८मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥
९यवागूरुष्णिका श्राणा विलेपी तरला च सा ॥
१०म्रक्षणाभ्यञ्जने तैलं ११कृसरस्तु तिलौदनः ॥ १ ॥
१२गव्यं त्रिषु गवां सर्वं गोविड् १३गोमयमस्त्रियाम् ॥५०॥
तत्तु शुष्कं १४करीषोऽस्त्री १५दुग्धं क्षीरं पयः समम् ॥
१६पयस्यमाज्यदध्यादि १७द्रप्सं दधि घनेतरत् ॥ ५१ ॥
१८घृतमाज्यं हविः १९सर्पिर्नवनीतं नवोद्धृतम्
तत्तु २०हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतम् ॥ ५२ ॥

---

१ द्वे आर्द्रभ्रष्टव्रीहितण्डुलस्य । [ चूरा ] २ एकं भ्रष्टयवे । ३ त्रीणि तण्डुलपिष्टरचितभक्ष्यभेदस्य ( मालपूवा ) ४ एकं दधियुक्तसक्तूनाम् । ५ षट्कमन्नस्य । ६ द्वे दग्धान्नस्य । ७ एकं सर्वरसाग्रस्य । ८ त्रीणि भक्तसमुद्भवे ( माड ) ९ पञ्च यवद्रवान्नस्य १० द्वे तैलस्य । ११ एकं तिलमिश्रौदनस्य । १२ एकं क्षीरादीनाम् । १३ द्वे गोपुरीषस्य । १४ एकं शुष्कगोमयस्य । १५ त्रीणि दुग्धस्य । १६ एकं आज्यदध्यादेः । १७ एकं घनेतरदध्नः । १८ चत्वारि घृतस्य । १९ द्वे नवनीतस्य ( मक्खन ) । २० एकं मथितदध्नो नवोद्धृतस्य ।

ण्डाहतं कालशेयमरिष्टमपि गोरसः ।
ं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥५३॥
ण्डं दधिभवं [2]मस्तु [3]पीयूषोऽभिनवं पयः ।
अशनाया बुभुक्षा क्षुद्ग्रासस्तु कवलः [5]पुमान् ॥५४॥
सपीतिः स्त्री तुल्यपानं [7]सग्धिः स्त्री सहभोजनम् ।
उदन्या तु पिपासा तृट् तर्षो [9]जग्धिस्तु भोजनम् ॥५५॥
मनं लेह आहारो निघासो न्याद इत्यपि ।
[10]सौहित्यं तर्पणं तृप्तिः [11]फेलाभुक्तसमुज्झितम् ॥५६॥
[12]कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।
[13]गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः ॥ ५७ ॥
[14]गोमहिष्यादिकं पादबन्धनं द्वौ गवीश्वरे ।
[15]गोमान् गोमी [16]गोकुलन्तु गोधनं स्याद्गवाम्व्रजे ।
[17]त्रिष्वाशितं गवीनन्तद्गावो यत्राशिताः पुरा ॥५८॥

---

१ चत्वारि तक्रस्य । २ एकं दधिभवमण्डस्य । ३ एकं नवप्रसूताया गो सप्तदिनावधिक्षीरस्य । ४ त्रयं क्षुधः । ५ द्वे ग्रासस्य । ६ द्वे सहपानस्य । ७ द्वे सहभोजनस्य । ८ चत्वारि तृषः । ९ सप्त भोजनस्य । १० त्रीणि तृप्तेः । ११ एकं पूर्वभुक्तत्यक्तसमुज्झितस्य । १२ षट् यथेप्सितस्य । १३ षट् गोपालस्य । १४ एकं पादबन्धनस्य । १५ द्वे गवीश्वरस्य । १६ द्वे गोसमूहस्य । १७ एकं यत्र पुरा गावो भोजितास्तत्स्थानम् ।

[1]उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥ ५९ ॥
अनड्वान् सौरभेयो गौरुक्ष्णां [2]संहतिरौक्षकम् ।
[3]गव्या गोत्रा गवां [4]वत्सधेन्वोर्वात्सकधेनुके ॥ ६० ॥
वृषो महान् [5]महोक्षः [6]स्याद् वृद्धोक्षस्तु जरद्गवः ।
उत्पन्न उक्षा [7]जातोक्षः सद्यो जातस्तु [8]तर्णकः ॥६१॥
[9]शकृत्करिस्तु वत्सः स्याद्दम्यवत्सतरौ समौ ।
[11]आर्षभ्यः षण्डतायोग्यः [12]षण्डो गोपतिरिट्चरः ६२
स्कन्धदेशे त्वस्य [13]वहः [14]सास्ना तु गलकम्बलः ।
[15]स्यान्नस्तितस्तु नस्योतः [16]प्रष्ठवाड् युगपार्श्वगः॥६३॥
युगादीनां तु वोढारो [17]युग्यप्रासङ्ग्यशाकटाः ।
खनति तेन तद्वोढास्येदं [18]हालिकसैरिकौ ॥ ६४ ॥

धूर्वहे धुर्यधौरेय धुरीणाः स धुरन्धराः ।
[2]उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥
स तु सर्वधुरीणः स्याद्यो वै [3]सर्वधुरावहः ।
[4]माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥६६॥
अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा [5]गोषु नैचिकी ।
वर्णादिभेदात्संज्ञाः स्युः [6]शबलीधवलादयः ॥ ६८ ॥
[7]द्विहायनी द्विवर्षा गौरेकाब्दा त्वेकहायनी ।
चतुरब्दा चतुर्हायण्येवं त्र्यब्दा त्रिहायणी ॥ ६८ ॥
[8]वशा वन्ध्या [9]वतोका तु स्रवद्गर्भाऽथ सन्धिनी ।
[10]आक्रान्ता वृषभेणाथ [11]वेहद्गर्भोपघातिनी ॥ ६९ ॥
[12]काल्योपसर्या प्रजने [13]प्रष्ठौही बालगर्भिणी ।
[14]स्यादचण्डी तु सुकरा [15]बहुसूतिः परेष्टुका ॥७०॥
[16]चिरप्रसूता बष्कयिणी [17]धेनुः स्यान्नवसूतिका ।

---

१ पञ्च धुरन्धरस्य । २ त्रयं य एकामेव धुरं वहति तस्य । ३ एकं सर्वामपि धुरं वहति तस्य । ४ नवकं गवि । ५ एकं गोषु उत्तमायाः गोः । ६ एवैकं वर्णादिभेदात् ज्ञेयम् । ७ एते वयोभेदात्संज्ञाभेदाः । ८ द्वे वन्ध्यायाः । ९ द्वे अकस्मात्पतितगर्भायाः । १० एकं वृषभेण मैथुनार्थमाक्रान्तायाः । ११ एकं वृषोपगमनाद्गर्भोपघातिन्याः । १२ एकं गर्भग्रहणकालप्राप्तायाः । १३ एकं बालगर्भिण्याः । १४ द्वे अक्रोधनायाः । १५ द्वे बहुप्रसवायाः । १६ द्वे दीर्घकालेन प्रसूतायाः । १७ द्वे नवसूतिकायाः ।

[1]सुव्रता सुखसन्दोह्या पीनोघ्नी [2]पीवरस्तनी ॥ ७१ ॥
[3]द्रोणक्षीरा द्रोणदुग्धा [4]धेनुष्या बन्धके स्थिता ।
[5]समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥
[6]ऊधस्तु क्लीबमापीनं समौ [7]शिवककीलकौ ।
[8]न पुंसि दाम सन्दानं [9]पशुरज्जुस्तु दामिनी ॥७३॥
[10]वैशाखमन्थमन्थानमन्थानो मन्थदण्डके ।
[11]कुठरो दण्डविष्कम्भो [12]मन्थनी गर्गरी समे ॥७४॥
[13]उष्ट्रे क्रमेलकमयमहाङ्गाः [14]करभः शिशुः ।
[15]करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥७५॥
[16]अजा छागी [17]शुभच्छागवस्तच्छगलका अजे ।
[18]मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥

---

१ द्वे सुखदोह्यायाः । २ द्वे स्थूलस्तन्याः ३ द्वे द्रोणपरिमितदुग्धदात्र्याम् । ४ एकमुत्तमर्णगृहे ऋणशुद्धिपर्यन्तं दोहनार्थं स्थापितायाः । ५ एकं या प्रतिवर्षं प्रसूयते तस्याः । ६ द्वे गोस्तनस्य (थन) ७ द्वे गोबन्धनार्थं निखातकाष्ठस्य । ८ द्वे बन्धनरज्ज्वाः । ९ द्वे दोहनकाले पादबन्धनरज्ज्वाः । १० पञ्च मन्थनदण्डस्य । ११ द्वे मन्थदण्डबन्धनस्तम्भस्य । १२ द्वे मथ्यमानदधिपात्रस्य । १३ चत्वारि उष्ट्रस्य । १४ एकमुष्ट्रशिशोः । १५ एकं काष्ठमयपादबन्धनोपेतकरभाणाम् । १६ द्वे अजायाः (बकरी) १७ पञ्च अजस्य (बोको) । १८ षण्मेषस्य । ( भेड़ )

उष्ट्रोरभ्राजवृन्दे स्या[1]दौष्ट्रकौरभ्रकाजकम् ।
[2]चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः ॥७७॥
वैदेहकः सार्थवाहो नैगमो वणिजो वणिक् ।
[3]पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥७८॥
[4]विक्रेता स्याद्विक्रयिकः [5]क्रायिकक्रयिकौ समौ ।
[6]वाणिज्यं तु वणिज्या [7]स्यान्मूल्यं वस्नोऽप्यवक्रयः ॥७९॥
[8]नीवी परिपणो मूलधनं [9]लाभोऽधिकं फलम् ।
[10]परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥
[11]पुमानुपनिधिर्न्यासः [12]प्रतिदानं तदर्पणम् ।
क्रये प्रसारितं [13]क्रय्यं [14]क्रेयं क्रेतव्यमात्रके ॥ ८१ ॥
विक्रेयं [15]पणितव्यं च पण्यं क्रय्यादयस्त्रिषु ।
क्लीबे [16]सत्यापनं सत्यंकारः सत्याकृतिः स्त्रियाम् ॥८२॥

---

१ एकैकं यथासंख्यमुष्ट्रोरभ्राजसमूहस्य । २ पञ्च गर्दभस्य । ३ अष्टौ क्रयविक्रयाभ्यां वर्तमानस्य । ४ द्वे वस्त्रान्नादि दत्वा तन्मूल्यं गृह्णतः । ५ द्वे मूल्येन वस्त्रादि गृह्णतः । ६ द्वे वाणिज्यकर्मणि । ७ त्रयं मूल्यस्य । ८ त्रीणि मूलधनस्य । ९ एकं मूलधनादधिकनिर्गमस्य । १० चत्वारि विनिमयस्य ( बदला ) । ११ द्वे निक्षेपस्य । १२ एकं निक्षेपस्य निक्षेप्त्रे अर्पणस्य । १३ द्वे एकम पणे क्रयार्थं प्रसारितवस्तुनः । १४ एकं यत्र क्रयोऽपि वर्तते तस्य । १५ त्रीणि विक्रयस्य वस्तुनः । १६ त्रयमवश्यमेतत्क्रेतव्यमित्यस्य [ बाई ] ।

[1]विपणो विक्रयः संख्याः संख्येये ह्यादश त्रिषु ।
विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥ ८३ ॥
संख्यार्थे द्विबहुत्वे स्तुस्तासु चानवतेः स्त्रियः ।
पङ्क्तेः शतसहस्रादि क[2]माद्दशगुणोत्तरम् ॥ ८४ ॥
[3]यौतवं द्रवयं पाय्यमिति मानार्थकं त्रयम् ।
[4]मानं तुलाऽङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः ॥ ८५ ॥
ते षोडशाक्षः कर्षोऽस्त्री [7]पलं कर्षचतुष्टयम् ।
[8]सुवर्णविस्तौ हेम्नोऽक्षे [9]कुरुविस्तस्तु तत्पले ॥ ८६ ॥
[10]तुला स्त्रियां पलशतं [11]भारः स्याद्विंशतिस्तुलाः ।
[12]आचितो दश भाराः स्युः शाकटो भार आचितः ॥
कार्षापणः कार्षिकः स्यात्कार्षिके ताम्रिके पणः ॥

---

१ द्वे विक्रयस्य । २ यदाहुः "एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् ॥ जलधिश्चान्त्यं मध्यं परार्धमिति दश गुणोत्तराः संज्ञाः । संख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्वैः" इति । ३ त्रयं परिमाणवाचकस्य । ४ तुलामानमङ्गुलिमाने प्रस्थमानं चेति त्रिविधम् । ५ एकं माषकस्य [माशा] । ६ द्वे अक्षस्य [तोला] । ७ एकं पलस्य । ८ द्वे सुवर्णाक्षस्य । ९ एकं सुवर्णपलस्य । १० एकं पलानां शतस्य । ११ एकं तुलानां विंशत्याः । १२ एकं दशभारयाम् । शकटेन वोढुं शक्ये भारोऽप्याचितः । १३ द्वे रूप्या, इति ख्यातस्य । १४ एकं ताम्रकार्षिकस्य [पैसा]

अस्त्रिया [1]माढकद्रोणौ खारी वाहो निकुञ्चकः ॥८८॥
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ॥
[2]पादस्तुरीयो भागः [3]स्यादंशभागौ तु वराटके ॥ ८९ ॥
[4]द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ॥
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥ ९० ॥
[5]स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते ॥
ताभ्यां [6]यदन्यत्तत्कुप्यं [7]रूप्यं तद्‌द्वयमाहतम् ॥ ९१ ॥
[8]गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ॥
[9]शोणरत्नं लोहितकः पद्मरागोऽथ [10]मौक्तिकम् ॥९२॥
मुक्ताऽथ [11]विद्रुमः पुंसि प्रवालं पुन्नपुंसकम् ॥
[12]रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥ ९३ ॥

---

१ एते प्रत्येकं परिमाणविशेषवाचकाः । ते यथा-आढका (पायली । द्रोणः (अधमन) खारी (दशमन) वाहः (चारमन) निकुञ्चकः (मूठ) कुडव (एक पाव) प्रस्थः सेर इति । २ एकं रूप्यकादेश्चतुर्थभागस्य त्रीणि भागमात्रस्य । ४ त्रयोदश धनस्य । ५ द्वे घटितघटितयोर्हेमरूप्ययोः । ६ एकं हेमरूप्याभ्यामन्यत्ताम्रादिकस्य । ७ एकं नाणे इति ख्यातस्य । ८ चत्वारि मरकतमणेः ( पन्ना ) । ९ त्रीणि पद्मरागस्य ( माणिक ) । १० द्वे मौक्तिकस्य ( मोती ) ११ द्वे प्रवालस्य ( मुंगा ) । १२ द्वे मणिजातौ मुक्तादिके च ।

[1]स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ॥
तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥ ९४ ॥
चामीकरं जातरूपं महारजतकाञ्चने ॥
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ ९५ ॥
अलङ्कारसुवर्णं [2]यच्छृङ्गीकनकमित्यदः ॥
[3]दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९६ ॥
[4]रीतिः स्त्रियामारकूटो न स्त्रियामथ [5]ताम्रकम् ॥
शुल्वं म्लेच्छमुखं द्व्यष्टवरिष्टोदुम्बराणि च ॥ ९७ ॥
[6]लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी ॥
अश्मसारोऽथ [7]मण्डूरं सिंहाणमपि तन्मले ॥ ९८ ॥
सर्वं च तैजसं लोहं [8] विकारस्त्वयसः [9]कुशी ॥
( सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु ।
सीसं कालायसञ्चैव मष्टौ लोहानि चक्षते )
क्षारः [10]काचोऽथ [11]चपलो रसः सूतश्च पारदे ॥९९॥
[12]गवलं माहिषं [13]शृङ्गमभ्रकं गिरिजामले ॥

---

१ एकोनविंशतिः सुवर्णस्य । २ एकमलङ्कारसुवर्णस्य । ३ पञ्च रजतस्य । ४ द्वे पित्तलस्य । ५ षट् ताम्रस्य । ६ सप्त लोहस्य । ७ द्वे लोहमलस्य । ८ "सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु । सीसं कालायसञ्चैवमष्टौ लोहानि चक्षते" इति । ९ एकमयसो विकारस्य । १० द्वे काचस्य । ११ चत्वारि पारदस्य । १२ एकं माहिषशृङ्गस्य । १३ द्वे अभ्रकस्य ।

१स्रोतोऽञ्जनं तु सौवीरं कापोताञ्जनयामुने ॥१००॥
२तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके ॥
कर्परी दार्विकाक्वाथोद्भवं तुत्थं ३रसाञ्जनम् ॥ १०१ ॥
रसगर्भं तार्क्ष्यशैलं ४गन्धाश्मनि तु गन्धकः ॥
सौगन्धिकश्च ५चक्षुष्याकुलाल्यौ तु कुलत्थिका ॥१०२॥
६रीतिपुष्पं पुष्पकेतु पुष्पकं कुसुमाञ्जनम् ॥
७पिञ्जरं पीतनं तालमालं च हरितालके ॥ १०३ ॥
८गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु ॥
९बोलगन्धरसप्राणपिण्डगोपरसाः समाः ॥ १०४ ॥
१०डिण्डीरोऽब्धिकफः फेनः ११सिन्दूरं नागसम्भवम् ॥
१२नागसीसकयोगेष्टवप्राणि १३त्रपु पिच्चटम् ॥ १०५ ॥
रङ्गवङ्गे अथ १४पिचुलस्तूलोऽथ १५कमलोत्तरम् ॥

---

१ चत्वारि नीलाञ्जनस्य ( सुर्मा ) पञ्च तुत्थाञ्जनस्य ( तूतिया ) ३ त्रीणि रसाञ्जनस्य ( अकार्दुन्सं इति ख्यातस्य )। ४ त्रीणि गन्धकस्य ५ त्रीणि तुत्थविशेषस्य ( निल मुसा )। ६ चत्वारि सन्तमणिक्षामुतिमस्य । ७ पञ्च हरितालस्य । ८ पञ्च शिलाजतुनः ९ पञ्च गन्धरसस्य बोर)। १० त्रयं समुद्रफेनस्य । ११ द्वे सिन्दूरस्य । १२ पञ्च सीसकस्य ( सिसा ) १३ चत्वारि वङ्गे ( रांग ) १४ द्वे कर्पासस्य । १५ चत्वारि कुसुम्भस्य ।

स्यात्कुङ्कुमं वह्निशिखं महारजनमित्यपि ॥ १०६ ॥
[१]मेषकम्बल ऊर्णायुः शशोर्णं [२]शशलोमनि ॥
[३]मधु क्षौद्रं माक्षिकादि [४]मधूच्छिष्टं तु सिक्थकम् १०७
[५]मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ॥
[६]नैपाली कुनटी गोला [७]यवक्षारो यवाग्रजः ॥ १०८ ॥
पाक्योऽथ सर्जिकाक्षारः [८]कापोतः सुखवर्चकः ॥
[९]सौवर्चलं स्याद्रुचकं [१०]त्वक्क्षीरी वंशरोचना ॥ १०९ ॥
[११]शिग्रुजं श्वेतमरिचं [१२]मोरटं मूलमैक्षवम् ॥
[१३]ग्रन्थिकं पिप्पलीमूलं चटिकाशिर इत्यपि ॥ ११० ॥
[१४]गोलोमी भूतकेशो ना [१५]पत्राङ्गं रक्तचन्दनम् ॥
[१६]त्रिकटु त्र्यूषणं व्योषं [१७]त्रिफला तु फलत्रिकम् १११

॥ इति वैश्यवर्गः ॥ ९ ॥

---

१ द्वे कम्बलस्य। २ द्वे शशलोम्नः। ३ त्रीणि मधुनः। ४ द्वे मोम इति ख्यातस्य। ५ चत्वारि मनःशिलायाः। ६ त्रीणि नेपालदेशोद्भवायां मनःशिलायाम्। ७ त्रीणि जवाखार इति ख्यातस्य। ८ पञ्च सज्जीखार इति ख्यातस्य। ९ द्वे क्षारविशेषस्य। १० द्वे गोरोचन इति ख्यातस्य। ११ द्वे शोभाञ्जनबीजस्य। १२ एकं इक्षुमूलस्य। १३ त्रयं पिप्पलीमूलस्य। १४ द्वे जटामांस्याः। १५ द्वे रक्तचन्दनसदृशारक्तसारस्य। १६ त्रीणि शुण्ठीपिप्पलीमरिचानां समाहारस्य। १७ द्वे हरीतक्यामलकबिभीतकफलानां समाहारस्य।

[1]शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ॥
आचण्डालात्तु [2]सङ्कीर्णा अम्बष्ठकरणादयः ॥ १ ॥
शूद्राविशोस्तु [3]करणोऽम्बष्ठो [4]वैश्याद्विजन्मनोः ॥
[5]शूद्राक्षत्त्रिययोरुग्रो [6]मागधः क्षत्त्रियाविशोः ॥ २ ॥
[7]माहिष्योऽर्याक्षत्त्रिययोः [8]क्षत्ताऽर्याशूद्रयोः सुतः ॥
[9]ब्राह्मण्यां क्षत्त्रियात्सूतस्तस्यां [10]वैदेहको विशः ॥ ३ ॥
[11]रथकारस्तु माहिष्यात्करण्यां यस्य संभवः ॥
[12]स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ४ ॥
[13]कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ॥
तक्षा च तन्तुवायश्च नापितो रजकस्तथा ।
पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः ॥
कुलकः स्यात्कुलश्रेष्ठी [14]मालाकारस्तु मालिकः ॥५॥
[15]कुम्भकारः कुलालः स्या [16]त्पलगण्डस्तु लेपकः ॥

---

१ चत्वारि शूद्रस्य । २ एवं प्रतिलोमजानुलोमजादीनाम् । ३ एकं शूद्रवैश्यजस्य । ४ एकं वैश्य ब्राह्मणजस्य । ५ एकं शूद्राक्षत्रियजस्य । ६ एकं क्षत्रियावैश्यजस्य । ७ एकं वैश्याक्षत्रियजस्य । ८ एकं क्षत्रियाशूद्रजस्य । ९ एकं ब्राह्मणीक्षत्रियजस्य । १० एकं ब्राह्मणीवैश्यजस्य । ११ एकं करणीमाहिष्यजस्य । १२ एकं ब्राह्मणीशूद्रजस्य । १३ द्वे शिल्पिसंघे । "तक्षा च तन्तुवायश्च नापितो रजकस्तथा । पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः„ इति । १४ द्वे मालाकारस्य ( माली ) । १५ द्वे कुलालस्य कुम्हार इ भाषायाम् । १६ द्वे गृहादौ लेपकारस्य ।

[१]तन्तुवायः कुविन्दः [२]स्यात्तुन्नवायस्तु सौचिकः ६॥
[३]रङ्गाजीवश्चित्रकरः [४]शस्त्रमार्जोऽसिधावकः ॥
[५]पादूकृच्चर्मकारः स्याद्व्योकारो [६]लोहकारकः ॥ ७ ॥
[७]नाडिन्धमः स्वर्णकारः कलादो रुक्मकारकः ॥
[८]स्याच्छाङ्खिकः काम्बविकः [९]शौल्बिकस्ताम्रकुट्टकः ८॥
[१०]तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट् ॥
ग्रामाधीनो [११]ग्रामतक्षः [१२]कौटतक्षोऽनधीनकः ॥९॥
[१३]क्षुरी मुण्डी दिवाकीर्तिर्नापितान्तावसायिनः ॥
[१४]निर्णेजकः स्याद्रजकः [१५]शौण्डिको मण्डहारकः १०
[१६]जाबालः स्यादजाजीवो [१७]देवाजीवस्तु देवलः ॥
[१८]स्यान्माया शाम्बरी [१९]मायाकारस्तु प्रतिहारिकः ॥
[२०]शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ॥

१ द्वे पटानां निर्मातरि । २ द्वे कञ्चुक्यादेर्निर्मातरि । ३ द्वे रङ्गाजीवस्य । (रंगरेज) ४ द्वे शस्त्रघर्षणोपजीविनः । ५ द्वे चमार इति ख्यातस्य । ६ द्वे लोहार इति ख्यातस्य । ७ चत्वारि स्वर्णकारस्य । ८ द्वे शङ्खवादकस्य । ९ द्वे ताम्रकारस्य । १० पञ्च वर्द्धकेः । ११ एकं ग्रामवर्द्धकः । १२ एकं स्वाधीनवर्द्धकेः । १३ पञ्च नापितस्य । १४ द्वे वस्त्रधावकस्य । १५ द्वे सुराजीविनः । १६ द्वे अजारक्षकस्य । १७ द्वे देवपीठोपजीविनः । १८ द्वे इन्द्रजालस्य । १९ द्वे मायाविनः (गारुडी) (२० षट् नटस्य ।

भरता इत्यपि [1]नटाश्चारणास्तु कुशीलवाः ॥ १२ ॥
[2]मार्दङ्गिकाः मौरजिकाः [3]पाणिवादास्तु पाणिघाः ॥
[4]वेणुध्माः स्युर्वैणविका [5]वीणावादास्तु वैणिकाः ॥१३॥
[6]जीवान्तकः शाकुनिको द्वौ [7]वागुरिकजालिकौ ॥
[8]वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥
[9]भृतको भृतिभुक् कर्मकरो वैतनिकोऽपि सः ॥
[10]वार्तावहो वैवधिको [11]भारवाहस्तु भारिकः ॥ १५ ॥
[12]विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ॥
निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥१६॥
[13]भृत्ये दासेर दासेय दासगोप्यकचेटकाः ॥
नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः ॥ १७ ॥
[14]पराचितपरिस्कन्दपरजातपरैधिताः ॥

---

द्वे [illegible]म् । २ द्वे मृदङ्गवादकानाम् । ३ द्वे पाणितलेनैव पाण्यन्तरे मृदङ्गादिध्वनिमनुकुर्वन्ति तेषाम् । ४ द्वे वेणुवादिनाम् । ५ द्वे वीणावादिनाम् । ६ द्वे पक्षिणां हन्तरि । ७ द्वे जालेन मृगान् बध्नतः । ८ त्रयं मांसविक्रयोपजीव्य । ९ चत्वारि वेतनेन कर्मकारिणः । १० द्वे वार्तावाहके । ११ द्वे भारवाहे । १२ दश नीचस्य । १३ एकादश दासस्य । १४ चत्वारि परेण संवर्धितस्य ।

[1]मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः ॥ १८
[2]दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ॥
[3]चण्डालप्लवमातङ्गदिवाकीर्ति जनङ्गमाः ॥ १९ ॥
निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः ॥
भेदाः [4]किरातशबरपुलिन्दा म्लेच्छजातयः ॥ २० ॥
[5]व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ॥
[6]कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥ २१ ॥
शुनको भषकः श्वा [7]स्यादलर्कस्तु स योगितः ॥
श्वा [8]विश्वकद्रुर्मृगयाकुशलः [9]सरमा शुनी ॥२२॥
[10]विट्चरः सूकरो ग्राम्यो [11]वर्करस्तरुणः पशुः ॥
[12]आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ॥२३॥
दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः ॥
[14]चौरैकागारिकस्तेन दस्युतस्करमोषकाः ॥ २४ ॥

१ षट् अलसस्य । २ षट् दक्षस्य । ३ दश चण्डालस्य । ४ एते चाण्डालानां भेदाः । ५ चत्वारो व्याधस्य । ६ सप्त शुनकस्य । ७ एकं प्रयोगेण उन्मत्तत्वं प्राप्तस्य शुनः । ८ एकं मृगयाकुशलस्य । ९ एकं शुन्याः । १० एकं ग्रामशूकरस्य । ११ एकं तरुणपशोः । १२ चत्वारि पापर्द्धेः (शिकारी) । १३ एकं लुब्धकहतदक्षिणपार्श्वमृगस्य । १४ दश चोरस्य ।

प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ॥
[2]चौरिका स्तैन्यचौर्ये च स्तेयं [3]लोप्त्रं तु तद्धने ॥२५॥
[4]वीतसंस्तू पकरणं बन्धने मृगपक्षिणाम् ॥
[5]उन्माथः कूटयन्त्रं [6]स्याद्वागुरा मृगबन्धनी ॥ २६ ॥
[7]शुल्वं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणाः ॥
[8]उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ॥ २७ ॥
पुंसि [9]वेमा वायदण्डः [10]सूत्राणि नरि तन्तवः ॥
[11]वाणिर्व्यूतिः स्त्रियौ तुल्ये [12]पुस्तं लेप्यादिकर्मणि ॥
[13]पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता ॥
जतुत्रपुविकारे तु [14]जातुषं [15]त्रापुषं त्रिपु ॥ २८ ॥
[16]पिटकः पेटकः पेटा मञ्जुषाऽथ [17]विहङ्गिका ॥
भारयष्टिस्तदालम्बि [18]शिक्यं काचोऽथ [19]पादुका ३०

१ चत्वारि स्तेनस्य । २ एकं चौर्यकर्मणः । ३ एकं मृगपक्षिबन्धननिमित्तोपयो-गुपकरणस्य । ४ द्वे मृगादिबन्धनयन्त्रस्य । ५ द्वे कालीरज्जुविशेषस्य । ६ पञ्च रज्जोः । ७ द्वे रहट इति ख्यातस्य । ८ द्वे वस्त्रव्यूतिदण्डस्य । ९ द्वे सूत्रस्य । १० द्वे तन्तुवानस्य । ११ एकं पुत्तलिकादिकरणस्य । १२ एकं पाञ्चली इति ख्यातस्य । १३ एकं जातुविकारस्य । १४ एकं त्रपुविकारस्य । १५ चत्वारि मञ्जूषायाः (पेटी)। १६ द्वे शिरयाधारस्कन्धस्य (भुंगी) । १७ द्वे अवलम्बमानस्य रज्जुपञ्जरस्य (शिकहा)। १८ त्रयं पादत्राणस्य (जूता)।

पादूरुपानत्स्त्री सैवानुपदीना पदायता [1] ॥
[2]नध्री वध्री वरत्रा स्यादश्वादेस्ताडनी [3]कशा ॥ ३१ ॥
[4]चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ॥
[5]नाराची स्यादेषणिका [6]शाणस्तु निकषः कषः ॥ ३२ ॥
[7]व्रश्चना [8]पत्रपरशुरीषिका तूलिका समे ॥
[9]तैजसावर्तनी मूषा [10]भस्त्रा चर्मप्रसेविका ॥ ३३ ॥
[11]आस्फोटनी वेधनिका [12]कृपाणी कर्तरी समे ॥
[13]वृक्षादनी वृक्षभेदी [14]टङ्कः पाषाणदारणः ॥ ३४ ॥
[15]क्रकचोऽस्त्री [16]करपत्रमारा चर्मप्रभेदिका ॥
[17]सूर्मी स्थूणाऽयः प्रतिमा [18]शिल्पं कर्म कलादिकम् ॥
[19]प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ॥

---

१ एकं विस्तृतपादत्राणस्य । २ त्रयं चर्ममय्या रज्ज्वाः । ३ एकं चाबुक इति ख्यातस्य । ४ त्रयमन्त्यजवीणायाः ( किंगरी ) । ५ द्वे तराजू इति ख्यातस्य । ६ त्रीणि शाणस्य ( कसौटी ) । ७ द्वे त्वगादिच्छेदनार्थस्य परशोः । ८ द्वे शलाकाभेदस्य । ९ द्वे मूषायाः ( मूष ) । १० द्वे भाथी इति ख्यातस्य । ११ द्वे मण्यादिवेधोपयुक्तास्त्रभेदस्य । १२ द्वे कर्तर्योः ( कैंची, छुरी ) । १३ द्वे वृक्षभेदनार्थस्य शस्त्रस्य ( करोत ) इति ख्यातस्य । १४ द्वे टाकी इति ख्यातस्य । १५ द्वे करवत, करोत इति ख्यातस्य । १६ द्वे आरायाः ( आरी ) । १७ त्रयं लोहप्रतिमायाः । १८ एकं कलागीतनृत्यादिकस्य । १९ अष्टौ प्रतिमायाः ।

प्रतिकृतिरर्चा पुंसि प्रतिनिधि[1]रुपमोपमानं स्यात् ॥३६॥
वाच्यलिङ्गाः [2]समस्तुल्यः सदृक्षः सदृशः सदृक् ।
साधारणः समानश्च स्युरुत्तरपदे त्वमी ॥ ३७ ॥
[3]निभसंकाशनीकाशप्रतीकाशोपमादयः ।
[4]कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ॥ ३८ ॥
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ।
[5]सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ॥ ३९ ॥
गन्धोत्तमाप्रसन्नेराकादम्बर्यः परिस्रुता ।
मदिरा कश्यमद्ये [6]चाप्यवदंशस्तु भक्षणम् ॥ ४० ॥
[7]शुण्डापानं मदस्थानं [8]मधुवारा मधुक्रमाः ।
[9]मध्वासवो माधवको मधु माध्वीकमद्वयोः ॥ ४१ ॥
[10]मैरेयमासवः सीधुर्मेदको [11]जगलः समौ ।
[12]संधानं स्यादभिषवः [13]किण्वं पुंसि तु नग्नहूः ॥४२॥

---

१ द्वे उपमितकारस्य । २ सप्तकं समानस्य । ३ एतेऽपि सदृशपर्यायाः । ४ एकादश वेतनस्य । ५ त्रयोदश मद्यस्य । ६ एकं भर्जितचणकादिमर्दनस्य । ७ द्वे मद्यगृहस्य । ८ द्वे मधुपानपरिपाट्याः । ९ चत्वारि मधुकपुष्पोद्भवाय मद्यस्य । १० त्रयमिक्षुगुडादिजन्यस्य मद्यविशेषस्य । ११ द्वे सुराकल्कस्य । १२ द्वे मद्यसंधानस्य । १३ द्वे चषकादिपानपात्रस्य ।

१कारोत्तरः सुरामण्ड २आपानं पानगोष्ठिका ।
३चषकोऽस्त्री पानपात्रं ४सरकोऽप्यनुतर्षणम् ॥ ४३ ॥
५धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ॥
६स्युर्लग्नकाः प्रतिभुवः ७सभिका द्यूतकारकाः ॥ ४४ ॥
८द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥
९पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः १०पाशकाश्च ते ॥ ४५ ॥
११परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् ॥
१२अष्टापदं शारिफलं १३प्राणिद्यूतं समाह्वयः ॥ ४६ ॥
१४उक्ता भूरिप्रयोगत्वादेकस्मिन् येऽत्र यौगिकाः ॥
ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते ॥ ४७ ॥

॥ इति शूद्रवर्गः ॥

इत्यमरसिंहकृतौ नामलिङ्गानुशासने ॥
द्वितीयकाण्डो भूम्यादिः साङ्ग एव समर्थितः ॥ १ ॥

इत्यमरसिंहकृतौ नामलिङ्गानुशासने द्वितीयंकाण्डं समाप्तम् ।

१ एकं सुराया मण्डस्य । २ द्वे पानसभायाः । ३ द्वे मद्यपात्रस्य । ४ द्वे मद्यपानस्य । ५ पञ्च द्यूतकृतः । ६ द्वे ऋणादौ प्रतिनिधिभूतस्य ( जामीन ) ७ अर्थं द्यूतं कारयन्ति तेषाम् । ८ चत्वारि द्यूतस्य । ९ द्वे द्यूतजेयद्रव्यापण्येन पणं सस्य । १० त्रयं पाशकस्य । ११ एकं शारीणामितस्ततो नयने । १२ द्वे शारीखेलनाधारस्य । १३ द्वे मेषकुक्कुटादियोधविशेषस्य । १४ अत्र शूद्रवर्गे मालाकारादयः शब्दाः पुंसि प्रचुरप्रयोगदर्शनादेकस्मिन् लिङ्गे उक्तास्तद्योगवशादन्यत्र वृत्तौ वर्तते स्त्रियां क्लीबे चोहनीयाः ।

[1]विशेष्यनिघ्नः संकीर्णैर्नानार्थैरव्ययैरपि ॥
लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥ १ ॥
[3]स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ।
गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥
[4]सुकृती पुण्यवान् धन्यो [5]महेच्छस्तु महाशयः ॥
[6]हृदयालुः सुहृदयो [7]महोत्साहो महोद्यमः ॥ ३ ॥
[8]प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ॥
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥ ४ ॥
[9]पूज्यः प्रतीक्ष्यः [10]सांशयिकः संशयापन्नमानसः ॥
[11]दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ॥ ५ ॥

---

१ सामान्याख्येऽस्मिन् काण्डे विशेष्याधीनलिङ्गवचनैः सुकृत्यादिभिः परस्पर-संकीर्णैः [illegible], अनेकार्थेषु वर्तमानैः नाकलोकादिभिः [illegible] [illegible] [illegible] देशः । २ अस्मिन् काण्डे विशेष्यस्य यानि लिङ्गवचनानि तान्येव [illegible] एव वर्गा वक्ष्यन्ते इति [illegible] स्युः । ३ [illegible] । ४ [illegible] । ५ द्वे । ६ द्वे [illegible] । ७ द्वे [illegible] । ८ दश प्रवीणस्य । ९ द्वे पूज्यस्य । १० [illegible] । ११ त्रीणि दक्षिणमर्हति तस्य ।

[1]भरण्यभुक्कर्मकरः [2]कर्मकारस्तु तत्क्रियः ॥
[3]अपस्नातो मृतस्नात [4]आमिषाशी तु शौष्कुलः ॥१९॥
[5]बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः ॥
[6]परान्नः परपिण्डादो [7]भक्षको घस्मरोऽद्मरः ॥ २० ॥
[8]आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ॥
उभौ [9]त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके ॥ २१ ॥
[10]सर्वान्नीनस्तु सर्वान्नभोजी [11]गृध्नुस्तु गर्धनः ॥
[12]लुब्धोऽभिलाषुकस्तृष्णक् समौ [13]लोलुपलोलुभौ ॥
[14]सोन्मादस्तून्मदिष्णुः [15]स्यादविनीतः समुद्धतः ॥
[16]मत्ते शौण्डोत्कटक्षीबाः [17]कामुके कमितानुकः ॥२२॥
कम्रः कामयिताऽभीकः कमनः [illegible] भिकः ॥
[18]विधेयो विनयग्राही वचने सि

श्यः प्रणेयो [2]निभृतविनीतप्रश्रिताः समाः।
ष्टे धृष्णग्वियातश्च [4]प्रगल्भः प्रतिभान्विते ॥२५॥
याद्धृष्टे तु शालीनो [6]विलक्षो विस्मयान्विते।
धीरे कातरस्त्रस्ते [7]भीरुभीरुकभीलुकाः ॥ २६ ॥
ाशंसुराशंसितरि [10]गृहयालुर्ग्रहीतरि।
श्रद्धालुः श्रद्धया युक्ते [12]पतयालुस्तु पातुके ॥२७॥
लज्जाशीलेऽपत्रपिष्णुर्वन्दारु [14]रभिवादके।
शरारुर्घातुको हिंस्रः स्याद्वर्धिष्णुस्तु [16]वर्धनः ॥२८॥
[17]उत्पतिष्णुस्तूत्पतिताऽ [18]लङ्करिष्णुस्तु मण्डनः।
भूष्णुर्भविष्णुर्भविता [20]वर्तिष्णुर्वर्तनः समौ ॥ २९ ॥
[21]निराकरिष्णुः क्षिप्नुः स्यात्सान्द्रस्निग्धस्तु [22]मेदुरः ॥
[23]ज्ञाता तु विदुरो विन्दुर्विकासी[24] तु विकस्वरः ॥३०॥

---

१ द्वे वशंगतस्य। २ त्रयं विनीतस्य। ३ त्रीणि धार्ष्ट्यान्वितस्य। ४ द्वे सप्रतिभस्य। ५ द्वे अधृष्टस्य। ६ द्वे परकीयवर्णोत्पादौ मातावर्णस्य। द्वे भयद्रुतिरासात्माकुलस्य। ८ चत्वारि भयशीलस्य। ९ द्वे वाञ्छाशीलस्य। १० द्वे ग्रहणशीलस्य। ११ एकमास्तिक्यबुद्धियुक्तस्य। १२ द्वे पतनशीलस्य। १३ द्वे लज्जायुक्तस्य। १४ द्वे वन्दनशीलस्य। १५ त्रीणि हिंसाशीलस्य। १६ द्वे वर्धनशीलस्य। १७ द्वे उत्पतनशीलस्य। १८ द्वे अलङ्करणशीलस्य। १९ त्रीणि भवनशीलस्य। २० द्वे वर्तनशीलस्य। २१ द्वे निराकर्तुः। २२ एकं सान्द्रस्निग्धस्य। २३ त्रयं ज्ञातरि। २४ द्वे विकासशीलस्य।

[1]विसृत्वरो विसृमरः प्रसारी च विसारिणी ।
[2]सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ॥२
[3]क्रोधनोऽमर्षणः कोपी [4]चण्डस्त्वत्यन्तकोपनः ।
[5]जागरूकोजागरिता [6]घूर्णितः प्रचलायितः ॥ ३१ ॥
[7]स्वप्नक् शयालुर्निद्रालुर्निद्राणा शयितौ [8]समौ ।
[9]पराङ्मुखः पराचीनः [10]स्यादवाङप्यधोमुखः ॥ ३२
[11]देवानञ्चति देवद्र्यङ् [12]विश्वद्र्यङ् [illegible] : चाति
यः सहाञ्चति [13]सध्र्यङ् स स तिर्यङ् [illegible]
[15]वदो वदावदो वक्ता [16]वागीशो वाक्पतिः समौ ॥
[17]वाचोयुक्तिपटुर्वाग्मी [18]वावदूकोऽतिवक्तरि ॥ ३५
[19]स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।
[20]दुर्मुखे मुखराबद्धमुखौ [21]शलकः प्रियम्वदे ॥ ३६

---

१ चत्वारि प्रसरणशीलस्य । २ षट् क्षमाशीलस्य । ३ श्रीणि कोपशीलस्य ४ द्वे अतिक्रोधशीलस्य । ५ द्वे जागरणशीलस्य । ६ द्वे निद्राघूर्णितस्य । ७ श्रीणि शीलस्य । ८ द्वे सुप्तस्य । ९ द्वे विमुखस्य । १० द्वे अधोमुखीभूतस्य । ११ एकं देवपूजकस्य । १२ एकं सर्वतोगमकस्य । १३ एकं तुल्यगमकस्य । १४ [illegible] गमकस्य । १५ श्रीणि वक्तुः । १६ द्वे अनवद्योपवादिनः १७ द्वे नैयायिकस्य । १८ द्वे बहुभाषिणः । १९ चत्वारि बहुवाच्यवाचकस्य २० अप्रसन्नमुखस्य । २१ द्वे प्रियवादिनः ।

[1]लोहलः स्यादस्फुटवाग्गर्ह्यवादी [2]तु कद्वदः ॥
समौ [3]कुवादकुचरौ [4]स्यादसौम्यस्वरोऽस्वरः ॥ ३७ ॥
[5]रवणः शब्दनो [6]नान्दीवादी नान्दीकरः समौ ॥
[7]जडोऽज्ञ [8]एडमूकस्तु वक्तुं श्रोतुमशिक्षिते ॥ ३८ ॥
[9]तूष्णींशीलस्तु तूष्णीको [10]नग्नोऽवासा दिगम्बरे ।
[11]निष्कासितोऽवकृष्टः [12]स्यादपध्वस्तस्तु धिक्कृतः ३९
[13]आत्तगर्वोऽभिभूतः [14]स्याद्दापितः साधितः समौ ॥
[15]प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः ४०
[16]निकृतः स्याद्विप्रकृतो [17]विप्रलब्धस्तु वञ्चितः ॥
[18]मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥ ४१ ॥
[19]अधिक्षिप्तः प्रतिक्षिप्तो [20]बद्धे कीलितसंयतौ ॥
[21]आपन्न आपत्प्राप्तः स्यात्कान्दिशीको [22]भयद्रुतः ४२

---

१ द्वे स्फुटवादिनः । २ द्वे कुत्सितभाषिणः । ३ द्वे दोषकथनशीलस्य । ४ द्वे असम्वरयुक्तस्य । ५ द्वे शब्दशीलस्य । ६ द्वे स्तुतिविशेषवादिनः । ७ द्वे अत्यन्तमूढस्य । ८ एकं वक्तुं श्रोतुं चाशिक्षितस्य । ९ द्वे तूष्णीभावयुक्तस्य । १० त्रीणि नग्नस्य । ११ द्वे निर्गमितस्य । १२ द्वे निर्भर्त्सितस्य । १३ द्वे भग्नदर्पस्य । १४ द्वे धनादिकं प्रदापितस्य । १५ चतुष्कं निराकृतस्य । १६ द्वे विप्रकृतस्य । १७ द्वे वञ्चनप्राप्तस्य । १८ चत्वारि मनसि हतस्य । १९ द्वे कृताक्षेपस्य । २० त्रीणि रज्ज्वादिना बद्धस्य । २१ द्वे आपद्गतस्य । २२ द्वे भयपलायितस्य ।

[1]आक्षारितः क्षारितोऽभिशस्ते [2]संकसुकोऽस्थिरे ॥
[3]व्यसनार्तोपरक्तौ द्वौ [4]विहस्तव्याकुलौ समौ ॥ ४३ ॥
[5]विक्लवो विह्वलः स्यात्तु [6]विवशोऽरिष्टदुष्टधीः ॥
[7]कश्यः कशार्हे संनद्धे [8]त्वाततायी वधोद्यते ॥ ४४ ॥
[9]द्वेष्ये त्वक्षिगतो [10]वध्यः शीर्षच्छेद्यः इमौ समौ ॥
[11]विष्यो विषेण यो वध्यो [12]मुसल्यो मुसलेन यः ॥ ४५ ॥
[13]शिश्विदानोऽकृष्णकर्मा [14]चपलश्चिकुरः समौ ॥
[15]दोषैकदृक् पुरोभागी [16]निकृतस्त्वनृजुः शठः ॥ ४६ ॥
[17]कर्णेजपः सूचकः [18]स्यात्पिशुनो दुर्जनः खलः ॥
[19]नृशंसो घातुकः क्रूरः पापो [20]धूर्तस्तु वञ्चकः ॥ ४७ ॥
[21]अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः ॥

---

१ त्रयं लोकापवादेन दूषितस्य । २ द्वे चपलप्रकृतेः । ३ द्वे व्यसनपीडितस्य ४ द्वे शोकादिभिरितिकर्तव्यतामूढस्य । ५ द्वे शोकादिनागात्रभङ्गं प्राप्तस्य ॥ ६ द्वे आसन्नमरणध्वस्तबुद्धेः । ७ द्वे कशाघातमर्हतः । ८ एकं वधोद्यतस्य । ९ द्वे द्वेषार्हस्य । १० द्वे वधार्हस्य । ११ एकं विषेण वध्यस्य । १२ एकं मुसलेन वध्यस्य । १३ द्वे पुण्यकर्मणः । १४ विचारं विना बन्धादिकारस्य । १५ द्वे दोषमात्रं पश्यतः । १६ त्रयं वक्रान्तःकरणस्य । १७ कर्णे परापवादं वदतः । १८ त्रयं परस्परभेदशीलस्य । १९ चत्वारि परद्रोहशीलस्य । २० द्वे प्रतारणशीलस्य । २१ षट् मूर्खस्य ।

[१]कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः ॥ ४८ ॥
[२]निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।
[३]वनीयको याचनको मार्गणो याचकार्थिनौ ॥ ४९ ॥
[४]अहङ्कारवानहंयुः [५]शुभंयुस्तु शुभान्वितः ।
[६]दिव्योपपादुका देवा नृगवाद्या [७]जरायुजाः ॥ ५० ॥
[८]स्वेदजाः कृमिदंशाद्याः [९]पक्षिसर्पादयोऽण्डजाः ।
॥ इति प्राणिवर्गः ॥
[१०]उद्भिदस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम् ॥ ५१ ॥
[११]सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥ ५२ ॥
[१२]तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।
[१३]अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥५३ ॥
[१४]निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ।
कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥ ५४ ॥

---

१ पञ्च कृपणस्य । २ पञ्च दरिद्रस्य । ३ पञ्च याचकस्य । ४ द्वे अहङ्कारिणः । ५ द्वे शुभयुक्तस्य । ६ एकमयोनिजस्य उपपादुकत्वेनान्यो बाह्यदेहानाम् । ७ एकं जरायुजानाम् । ८ एकं स्वेदजानाम् । ९ एकम् अण्डजानाम् । १० अयम् उद्भिदि । ११ द्वादश सुन्दरस्य । १२ एकं यद्दर्शनात् दृशोस्तृप्तिर्नास्ति तस्य । १३ षडभीष्टस्य । १४ त्रयोदशाऽधमस्य ।

[१]मलीमसं तु मलिनं कच्चरं मलदूषितम् ।
[२]पूतं पवित्रं मेध्यञ्च [३]वीध्रन्तु विमलार्थकम् ॥ ५५॥
[४]निर्णिक्तं शोधितम्मृष्टं निःशोध्यमनवस्करम् ।
[५]असारम्फल्गु [६]शून्यन्तु वशिकन्तुच्छरिक्तके ॥५६॥
क्लीबे [७]प्रधानम्प्रमुखप्रवेकानुत्तमोत्तमाः ।
मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत् ॥ ५७ ॥
परार्ध्याग्र्यप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् ।
[८]श्रेयान् श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ५८
स्युरुत्तरपदे [९]व्याघ्रपुङ्गवर्षभकुञ्जराः ।

त्रियाम्मात्रा त्रुटिः पुंसि लवलेशकणाणवः ।
[1]अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ॥ ६२ ॥
[2]प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।
पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च ॥ ६३ ॥
परःशताद्यास्ते येषां परा संख्या शतादिकात् ।
[3]गणनीये तु गणेयं [4]संख्याते गणितमथ [5]समं सर्वम् ६४
विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ।
समग्रं सकलं पूर्णमखण्डं स्यादनूनके ॥ ६५ ॥
[6]घनं निरन्तरं सान्द्रं [7]पेलवं विरलं तनु ।
[8]समीपे निकटासन्नसन्निकृष्टसनीडवत् ॥ ६६ ॥
सदेशाभ्याशसविधसमर्यादसवेशवत् ।
उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ॥ ६७ ॥
[9]संसक्ते त्वव्यवहितमपदान्तरमित्यपि ।
[10]नेदिष्ठमन्तिकतमं [11]स्याद्दूरं विप्रकृष्टकम् ॥ ६८ ॥

---

१ चत्वारि अत्यल्पे । २ द्वादश बहुलस्य । ३ द्वे गणयितुं शक्यस्य । ४ द्वे संख्यातस्य । ५ चतुर्दश समस्तस्य । ६ त्रीणि निबिडस्य । ७ त्रीणि विरलस्य । ८ पञ्चदश समीपस्य । ९ त्रीणि संसक्तस्य । १० द्वे अतिनिकटस्य । ११ द्वे दूरस्य ।

[1]दवीयश्च दविष्ठं च सुदूरं [2]दीर्घमायतम् ।
[3]वर्तुलं निस्तलं वृत्तं [4]बन्धुरं तून्नतानतम् ॥ ६९ ॥
[5]उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ [6]वामने ।
न्यङ्नीचखर्वह्रस्वाः [7]स्युरवाग्रेऽवनतानतम् ॥ ७० ॥
[8]अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ।
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ॥ ७१ ॥
[9]ऋजावजिह्मप्रगुणौ [10]व्यस्ते त्वप्रगुणाकुलौ ।
[11]शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ॥ ७२ ॥
[12]स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः ।
कालव्यापी स [13]कूटस्थः [14]स्थावरो जङ्गमेतरः ॥७३॥
[15]चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम् ।
[16]चलनं कम्पनं कम्प्रं [17]चलं लोलं चलाचलम् ।
चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ।

---

१ त्रयम् अत्यन्तदूरस्य । २ द्वे दीर्घस्य । ३ त्रीणि वर्तुलस्य । ४ द्वे समतस्य । ५ षडुन्नतस्य । ६ पञ्च ह्रस्वस्य । ७ त्रयमधोमुखस्य । ८ एकादश वक्रस्य । ९ त्रीणि ऋजुनः । १० त्रयमगुणस्य । ११ पञ्च नित्यस्य । १२ त्रीण्यतिस्थिरस्य । १३ एकं कूटस्थस्य । १४ द्वे स्थावरस्य । १५ षट् चरस्य । १६ त्रयं कम्पशीलस्य । १७ षट्कं चपलस्य ।

[1]अतिरिक्तः समधिको [2]दृढसंधिस्तु संहतः ॥ ७५ ॥
[3]कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ॥
जठरं मूर्तिमन्मूर्तं [4]प्रवृद्धं प्रौढमेधितम् ॥ ७६ ॥
[5]पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः ॥
[6]प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥ ७७ ॥
नूत्नश्च [7]सुकुमारं तु कोमलं मृदुलं मृदुः ॥
[8]अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ॥ ७८ ॥
[9]प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम्[10]
[11]एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ॥ ७९ ॥
अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि सः ॥
[12]पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् ॥ ८० ॥
[13]अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः ॥
[14]मोघं निरर्थकं [15]स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् ॥ ८१ ॥

---

१ द्वे अभिमूतस्य । २ द्वे दृढसंधानयुक्तस्य । ३ नव कठिनस्य । ४ अयं प्रवृद्धस्य ५ पञ्च पुरातनस्य । ६ षट् नूतनस्य । ७ चत्वारि कोमलस्य । ८ पश्चादित्यर्थे । ९ द्वे इन्द्रियग्राह्यस्य । १० द्वे इन्द्रियैरग्राह्यस्य । ११ सप्त एकाग्रस्य । १२ पञ्च प्रथमस्य । १३ षडन्त्यस्य । १४ द्वे व्यर्थस्य । १५ चत्वारि स्पष्टस्य ।

१साधारणं तु सामान्यमेकाकी२ त्वेक एककः ॥
३भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि ॥ ८२ ॥
४उच्चावचं ५नैकभेदमुच्चण्डमविलम्बितम् ॥
६अरुन्तुदन्तु ७मर्मस्पृगबाधन्तु निरर्गलम् ॥ ८३ ॥
८प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ॥
वामं शरीरं ९सव्यं १०स्यादपसव्यं तु दक्षिणम् ॥ ८४ ॥
११संकटं ना तु संबाधः १२कलिलं गहनं समे ॥
१३संकीर्णं संकुलाकीर्णं १४मुण्डितं परिवापितम् ॥ ८५ ॥
१५ग्रथितं संदितं दृब्धं १६विसृतं विस्तृतं ततम् ॥
१७अन्तर्गतं विस्मृतं १८स्यात्प्राप्तप्रणिहिते समे ॥ ८६ ॥
१९वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ॥
२०नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ॥ ८७ ॥

१ द्वे साधारणस्य । २ प्रथमसहायस्य । ३ षट् भिन्नस्वार्थकाः । ४ द्वे बहुविधस्य ५ द्वे तूर्णीस्य । द्वे मर्मभेदिनः । ७ द्वे निरर्गलस्य । ८ चत्वारि विपरीतस्य । ९ एकं वामशरीरस्य । १० एकं दक्षिणशरीरस्य । ११ द्वे अस्त्रावकाशे वर्त्मादौ । १२ द्वे दुर्विगम्यस्य । १३ त्रीणि जनादिभिरत्यन्तमिश्रस्य । १४ द्वे कृतमुण्डनस्य । १५ त्रीणि गुम्फितस्य । १६ त्रीणि लब्धप्रसरस्य । १७ द्वे विस्मृतस्य । १८ द्वे लब्धस्य । १९ षडीषत्कम्पितस्य २० सप्त प्रेरितस्य ।

[1]परिक्षिप्तं तु निवृतं [2]मूषितं मुषितार्थकम् ॥
[3]प्रवृद्धप्रसृते [4]न्यस्तनिसृष्टे [5]गुणिताहते ॥ ८८ ॥
[6]निदिग्धोपचिते [7]गूढगुप्ते [8]गुण्ठितरूषिते ॥
[9]द्रुतावदीर्णे [10]उद्गूर्णोद्यते [11]काचितशिक्यिते ॥ ८९ ॥
[12]घ्राणघ्राते [13]दिग्धलिप्ते [14]समुदक्तोद्धृते समे ॥
[15]वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम् ॥ ९० ॥
[16]रुग्णं भुग्नेऽथ [17]निशितक्ष्णुतशातानि तेजिते ॥
स्याद्विनाशोन्मुखं [18]पक्वं [19]ह्रीणह्रीतौ तु लज्जिते ॥ ९१ ॥
[20]वृत्ते तु वृत्तव्यावृत्तौ [21]संयोजित उपाहितः ॥
[22]प्राप्यं गम्यं समासाद्यं [23]स्यन्नं रीणं स्रुतं स्रुतम् ॥

---

१ द्वे प्राकारादिना सर्वतो वेष्टितस्य । २ द्वे चौरैर्हृतस्य । ३ द्वे प्रसारितस्य । ४ द्वे निक्षिप्तस्य । ५ द्वे अभ्यावर्तितस्य । ६ द्वे पनद्धस्य । ७ द्वे गोपितगुप्तस्य । ८ द्वे धूल्या लिप्तस्य । ९ द्वे द्रवीभूतस्य । १० द्वे उत्तोलितस्य खड्गादेः । ११ द्वे शिक्यस्थापितस्य । १२ द्वे घ्रातघ्रातस्य । १३ द्वे विलिप्तस्य । १४ द्वे उद्धृतस्य । १५ पञ्च वेष्टितस्य । १६ द्वे भग्नस्य । १७ चत्वारि शाणादिना तीक्ष्णीकृतस्य शस्त्रादेः । १८ एकं प्रतिपक्वविनाशोन्मुखस्य । १९ त्रयं लज्जायुक्तस्य । २० त्रयं वर्तुलाकारस्य । २१ द्वे संयोजितस्य । २२ त्रीणि प्राप्तुं योग्यस्य । २३ चत्वारि प्रस्रुतस्य ।

[1]संगूढः स्यात्संकलितो[2]ऽवगीतः ख्यातगर्हणः ॥
[3]विविधः स्याद्बहुविधो नानारूपः पृथग्विधः ॥ १३ ॥
[4]अवरीणो धिक्कृतश्चाप्यव[5]ध्वस्तोऽवचूर्णितः ॥
[6]अनायासकृतं फाण्टं [7]स्वनितं ध्वनितं समे ॥ १४ ॥
[8]बद्धे संदानितं मूतमुद्दितं संदितं सितम् ॥
[9]निष्पक्वे क्वथितं [10]पाके क्षीराज्यहविषां शृतम् ॥
[11]निर्वाणो मुनिवह्न्यादौ [12]निर्वातस्तु गतेऽनिले ॥
[13]पक्वं परिणते [14]गूनं हन्ने [15]मीढं तु मूत्रिते ॥ १५ ॥
[16]पुष्टे तु पुषितं [17]सोढे क्षान्त[18]मुद्वान्तमुद्गते ॥
[19]दान्तस्तु दमिते [20]शान्तः शमिते [21]प्रार्थितेऽर्दितः ॥
[22]ज्ञप्तस्तु ज्ञपिते [23]छन्नश्छादिते [24]पूजितेऽञ्चितः ॥

---

१ द्वे योजितस्याश्वादेः । २ द्वे निन्दितस्य । ३ चत्वारि नानाप्रकारस्य । ४ द्वे नि-न्दितमात्रस्य । ५ द्वे चूर्णीकृतस्य । ६ एकं कषायविशेषस्य । ७ द्वे ध्वनितस्य । ८ षड् बद्धस्य । ९ द्वे क्वाथादेः । १० एकं क्षीरादिपक्वस्य । ११ एकं मुनिवह्न्यादौ । १२ एकं गतानिलस्य । १३ द्वे पाकप्राप्तस्य । १४ द्वे कृतपुरीषोत्सर्गस्य । १५ द्वे कृतमूत्रोत्सर्गस्य । १६ द्वे कृतपोषणस्य । १७ द्वे क्षमाप्राप्तस्य । १८ द्वे वमनप्राप्तान्नादेः । १९ द्वे दमं प्रापितस्य । २० द्वे शमं प्रापितस्य । २१ द्वे याचितस्य । २२ द्वे बोधं प्रापितस्य । २३ द्वे आच्छादितस्य । द्वे पूजितस्य ।

[1]पूर्णस्तु पूरिते [2]क्लिष्टः क्लिशितेऽवसिते [3]सितः ॥ ९८ ॥
[4]प्रुष्टप्लुष्टोषिता दग्धे [5]तष्टत्वष्टौ तनूकृते ॥
[6]वेधितच्छिद्रितौ विद्धे [7]विन्नवित्तौ विचारिते ॥ ९९ ॥
[8]निष्प्रभे विगतारोकौ [9]विलीने विद्रुतद्रुतौ ॥
[10]सिद्धे निर्वृत्तनिष्पन्नौ [11]दारितेभिन्नभेदितौ ॥ १०० ॥
[12]ऊतं स्यूतमुतं चेति त्रितयं तन्तुसन्तते ॥
[13]स्यादर्हितेन मस्यितेनमसितमपचायितार्चितापचितम् ॥१०१॥
[14]वरिवसिते वरिवस्यितमुपासितञ्चोपचरितञ्च ॥
[15]सन्तापितसन्तप्तौ धूपितधूपायितौ च दूनश्च ॥१०२॥
[16]हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ॥
[17]छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ॥ १०३ ॥
[18]स्रस्तं ध्वस्तं भ्रष्टं [19]स्कन्नं पन्नं च्युतं गलितम् ॥

---

१ द्वे पूर्णस्य । २ द्वे क्लेशं प्रापितस्य । ३ द्वे समाप्तस्य । ४ चत्वारि दग्धस्य । ५ त्रीणि तनूकृतः । ६ त्रीणि वेधितस्य । ७ त्रीणि प्राप्तविचारस्य । ८ त्रयं दीप्तिहीनस्य । ९ त्रीणि द्रवीभूतस्य । १० त्रयं सिद्धस्य । ११ त्रीणि भेदं प्रापितस्य । १२ त्रीणि तन्तुसन्तते । १३ षट् पूजितस्य । १४ चत्वारि शुश्रूषितस्य । १५ पञ्च सन्तापितस्य । १६ षट् प्रमुदितस्य । १७ अष्टौ छिन्नस्य । १८ सप्त च्युतस्य ।

[1]लब्धं प्राप्तं विन्नं भावितमासादितं च भूतञ्च ॥ १०४ ॥
[2]अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् ॥
[3]आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तञ्च ॥
[4]त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च ॥
[5]अवगणितमवमतावज्ञातेऽवमानितञ्च परिभूते ॥१०६॥
[6]त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे ॥
[7]उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितं ॥
[8]बुद्धं बुधितं मनितं प्रतिपन्नमवसितावगते ॥
[9]ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ॥ १०८ ॥
संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ॥
[10]ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि ॥
अपि गीर्णवर्णिताभिष्टुतेडितानि स्तुतार्थानि ॥
[11]भक्षितचर्वितलीढप्रत्यवसितगिलितखादितप्सातम् ॥
अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ॥

---

१ षट् प्राप्तस्य । २ पञ्च गवेषितस्य । ३ षट् क्लिन्नस्य । ४ षट् रक्षितस्य । ५ पञ्चावमानितस्य । ६ षट् त्यक्तस्य । ७ षट् उदितस्य । ८ षडवगतस्य । ९ एकादश अङ्गीकृतस्य । १० द्वादश स्तुतस्य । ११ चतुर्दश खादितस्य ।

[1]क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ॥ १११ ॥
क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुलप्रकर्षार्थाः ॥
[2]साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ॥ ११२ ॥
बाढव्यायतबहुगुरुवामनवृन्दारकातिशये ॥

॥ इति विशेष्यनिघ्नवर्गः ॥ १ ॥

प्रकृतिप्रत्ययार्थाद्यैः [3]संकीर्णे लिङ्गमुन्नयेत् ॥
[4]कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः[5] ॥ १ ॥
साकल्यासंगवचने [6]पारायणपरायणे ॥
[7]यदृच्छा स्वैरिता [8]हेतुशून्या त्वास्या विलक्षणम् ॥२॥
[9]शमथस्तु शमः शान्तिर्दान्तिस्तु [10]दमथो दमः ॥
[11]अवदानं कर्म वृत्तं काम्यदानं [12]प्रवारणम् ॥३॥
[13]वशक्रिया संवननं [14]मूलकर्म तु कार्मणम् ॥

---

१ एते क्षेपिष्ठादयः अतिशयविशिष्टेषु क्षिप्रादिषु वर्तन्ते । २ एते साधिष्ठादयः अतिशयविशिष्टेषु बाढादिषु यथासंख्यं वर्तन्ते । ३ संकीर्णे नाम्नि वर्गे प्रकृत्यर्थेन प्रत्ययार्थेन क्वचित् पभेदादिना च लिङ्गमूहेत् । ४ द्वे क्रियायाः । ५ एवं क्रियासातत्ये गम्ये सति । ६ एकैकमात साकल्यपठनयोः । ७ द्वे स्वच्छन्दतायाः । ८ एवं तुल्यस्थितेः । ९ द्वयं चित्तोपशमस्य । १० द्वयमिन्द्रियनिग्रहस्य । ११ एवं भूतपूर्वचरितस्य । १२ एवं गुरुपुरुषादेर्दानस्य । १३ द्वे मणिमन्त्रादिना वशीकरणस्य । १४ एकम् औषधीनामूलैरुच्चाटनादेः ।

[१]विधूननं विधुवनं [२]तर्पणं प्रीणनावनम् ॥ ५ ॥
[३]पर्याप्तिः स्यात्परित्राणं हस्तधारणमित्यपि ॥
[४]सेवनं सीवनं [५]स्यूतिर्विदरः [६]स्फुटनं भिदा ॥
[७]आक्रोशनमभीषङ्गः [८]संवेदो वेदना न ना ॥
[९]संमूर्छनमभिव्याप्तिर्याच्ञा [१०]भिक्षाऽर्थनार्दना ॥ ६ ॥
[१०]वर्धनं छेदनेऽथ द्वे [११]आनन्दनसभाजने ॥
[१२]आप्रच्छन्नमथाम्नायः संप्रदायः [१३]क्षये क्षिया ॥ ७ ॥
[१४]ग्रहे ग्राहो [१५]वशः कान्तौ [१६]रक्ष्णस्त्राणे [१७]रणः क्वणे ॥
[१८]व्यधो वेधे [१९]पचा पाके [२०]हवो हूतौ [२१]वरो वृतौ ॥
[२२]ओषः प्लोषे [२३]नयो नाये [२४]ज्यानिर्जीर्णौ [२५]भ्रमो भ्रमौ ॥
[२६]स्फातिर्वृद्धौ [२७]प्रथा ख्यातौ [२८]स्पृष्टिः पृक्तौ [२९]स्रवः स्रवे

---

१ द्वे कम्पनस्य २ प्रीणि वचो यत निवारणस्य । ४ त्रयं सूचीक्रियायाः । ५ द्वयं द्विधाभावस्य । ६ द्वे गाली प्रदानस्य । ७ द्वे अनुभवस्य । ८ द्वे सर्वतो व्याप्तेः । ९ परशादि वचनस्य । १० द्वे कर्तनस्य । ११ प्रीतिस्वागतसंप्रश्नादिना विहितानन्दस्य । १२ द्वे गुरुपरम्परागतसदुपदेशस्य । १३ द्वे अपचयस्य । १४ द्वे ग्रहणस्य । १५ द्वे इच्छायाः । १६ द्वे रक्षणस्य । १७ द्वे शब्दकरणस्य । १८ द्वे वेधनस्य । १९ द्वे पचनस्य । २० द्वे आह्वानस्य । २१ द्वे वेष्टने संभक्ती च । २२ द्वे दाहस्य । २३ द्वयं नीतौ । २४ द्वे जीर्णतायाः । २५ द्वे भ्रान्तेः । २६ द्वे वृद्धौ २७ द्वे प्रख्यातेः । २८ द्वे स्पर्शस्य । २९ द्वे स्रवणस्य ।

[1]प्रत्युत्क्रमः प्रयोगार्थः [2]प्रक्रमः स्यादुपक्रमः ।
[3]स्यादभ्यादानमुद्धात आरम्भः [4]संभ्रमस्त्वरा ॥ २६ ॥
[5]प्रतिबन्धः प्रतिष्टम्भोऽवनायस्तु [6]निपातनम् ।
[7]उपलम्भस्त्वनुभवः [8]समालम्भो विलेपनम् ॥ २७ ॥
[9]विप्रलम्भो विप्रयोगो [10]विलम्भस्त्वति सर्जनम् ।
[11]विश्रावस्तु प्रतिख्याति[12]रवेक्षा प्रति जागरः ॥
[13]निपाठनिपठौ पाठे [14]तेमस्तेमौ समुन्दने ॥
[15]आदीनवास्रवौ क्लेशे [16]मेलके सङ्गसङ्गमौ ॥ २९ ॥
[17]संवीक्षणं विचयनं मार्गणं मृगणा मृगः ।
[18]परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ३० ॥
[19]निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम् ।
[20]प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ३१ ॥

१ द्वे योद्धुरतिशयोद्योगस्य । २ द्वे प्रथमारम्भस्य । ३ त्रीण्यारम्भस्य । ४ द्वे संवेगस्य । ५ द्वे कार्यप्रतिघातस्य । ६ द्वेऽधोनयनस्य । ७ द्वे साक्षात्कारस्य । ८ द्वे कुङ्कुमादिविलेपनस्य । ९ द्वे रागिणोर्विच्छेदस्य । १० द्वेऽनिदानस्य । ११ द्वे अतिप्रसिद्धेः । १२ द्वे वस्त्ववेक्षणस्य । १३ त्रीणि पठनस्य । १४ त्रीण्यार्द्रीभावस्य । १५ त्रीणि क्लेशस्य । १६ त्रीणि सङ्गमस्य । १७ पञ्च अभिप्रायेण वस्तुमार्गणस्य । १८ चत्वार्यालिङ्गनस्य । १९ षट् निरीक्षणस्य । २० चत्वारि निराकरणस्य ।

[1]एधा समृद्धौ [2]स्फुरणे स्फुरणा [3]प्रमितौ प्रमा ।
[4]प्रसूतिः प्रसवे [5]श्च्योते प्रावारः [6]क्लमथः क्लमे ॥१०॥
[7]उत्कर्षोऽतिशये [8]सन्धिः श्लेषे [9]विषय आश्रये ॥
[10]क्षिपायां क्षेपणं [11]गीर्णिर्गिरौ [12]गुरणमुद्यमे ॥११॥
[13]उन्नाय उन्नये [14]श्रायः श्रयणे [15]जनयने जयः ।
[16]निगादो निगदे [17]मादो मद [18]उद्वेग उद्भ्रमे॥१२॥
[19]विमर्दनं परिमलोऽभ्युपपत्तिरनुग्रहः[20] ।
[21]निग्रहस्तद्विरुद्धः [22]स्यादभियोगस्त्वभिग्रहः ॥ १३ ॥
[23]मुष्टिबन्धस्तु संग्राहो [24]डिम्बे डमरविप्लवौ ॥
[25]बन्धनं प्रसितिश्चारः [26]स्पर्शः स्प्रष्टोपतप्तरि ॥ १४ ॥

---

१ द्वे वर्धनस्य । २ द्वे स्फुरणस्य । ३ द्वे यथार्थ ज्ञानस्य । ४ द्वे गर्भविमोचनस्य । ५ द्वे घृतादि क्षरणस्य । ६ द्वे क्लमे । ७ द्वे प्रकर्षस्य । ८ द्वे सन्धानस्य ९ द्वे आश्रयस्य । १० द्वे प्रेरणस्य । ११ द्वे निगरणस्य । १२ द्वे भारोद्यमस्य १३ द्वे ऊर्ध्वनयनस्य ऊहस्य च । १४ द्वे सेवायाः । १५ द्वे जयस्य । १६ द्वे कथनस्य । १७ द्वे दर्पस्य । १८ द्वे उद्वेजनस्य । १९ द्वे कुङ्कुमादिमर्दनस्य ।२० द्वे ऽङ्गीकारस्य । २१ द्वे अनुग्रहविरुद्धस्य । २२ द्वे कलहादौ भस्य । २३ द्वे मुष्टिना दृढग्रहणस्य । २४ त्रीणि नरलुण्ठनादेरुपसर्गविशेषस्य । २५ त्रीणि बन्धनस्य २६ त्रीणि सततस्पर्शविशेषस्य ।

[1]निकरो विप्रकारः स्या [2]दाकारस्त्विङ्ग इङ्गितम् ।
[3]परिणामो विकारो द्वे समे [4]विकृति विक्रिये ॥ १५ ॥
[5]अपहारस्त्वपचयः [6]समाहारः समुच्चयः ।
[7]प्रत्याहार उपादानं [8]विहारस्तु परिक्रमः ॥ १६ ॥
[9]अभिहारो ऽभिग्रहणं [10]निर्हारोऽभ्यवकर्षणम् ।
[11]अनुहारोऽनुकारः स्यादर्थस्यापगमे [12]व्ययः ॥ १७॥
[13]प्रवाहस्तु प्रवृत्तिः स्यात्प्रवाहो[14] गमनं बहिः ।
[15]वियामो वियमो यामो यमः संयामसंयमौ ॥ १८ ॥
[16]हिंसाकर्माभिचारः स्याज्जागर्या [17]जागरा द्वयोः ।
[18]विघ्नोऽन्तरायः प्रत्यूहः [19]स्यादुपघ्नोऽन्तिकाश्रये ॥१९॥
[20]निर्वेश उपभोगः स्या त्परिसर्पः [21]परिक्रिया ।

---

१ द्वे ऽपकारस्य। २ श्रीएवमभिप्रायानुरूपचेष्टितस्य । ३ द्वे प्रकृतेरन्यथाभावे । ४ द्वे विरुद्धक्रियायाः । ५ द्वे ऽपहरणस्य । ६ द्वे राशीकरणस्य । ७ द्वे इन्द्रियाकर्षणस्य । ८ द्वे पदभ्यागते. । ९ द्वे चौर्यकरणस्य । १० द्वे पात्यादेर्निष्कासनस्य ११ द्वे विडम्बनस्य । १२ एकं अर्थस्यापगमस्य । १३ द्वे जलादीनां निरन्तरगतेः । १४ द्वे जलादीनां बहिर्गमनस्य । षट् संयमस्य योगाङ्गस्य । १६ द्वे अभिचारस्य । १७ द्वे जागरणस्य । १८ त्रीणि विघ्नस्य । १९ एकं समीपभूत आश्रयस्य । २० द्वे उपभोगस्य । २१ द्वे परिजनादिवेष्टनस्य ।

[१]ग्रामता [२]जनता [३]धूम्या [४]पाश्या [५]गल्या पृथक्पृथक्
अपि [६]साहस्रकारीष[७] [८]वार्मणाथर्वणादिकम्[९] ॥४१॥

इति सङ्कीर्णवर्गः ॥

[१०]नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः ।
भूरिप्रयोगाः ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥
आकाशे त्रिदिवे [११]नाको [१२]लोकस्तु भुवने जने ।
पद्ये यशसि च [१३]श्लोकः शरे खड्गे च [१४]सायकः ॥
[१५]जम्बुकौ क्रोष्टुवरुणौ [१६]पृथुकौ चिपिटार्भकौ ।
[१७]आलोकौ दर्शनद्योतौ [१८]भेरीपटहमानकौ ॥ २ ॥
[१९]उत्सङ्गचिह्नयोरङ्कः [२०]कलङ्कोऽङ्कापवादयोः ।

[१]तक्षको नागवर्धक्योरर्कः [२]स्फटिकसूर्ययोः ॥ ४ ॥
मारुते वेधसि ब्रध्ने पुंसि [३]कः [४]कं शिरोऽम्बुनोः ।
[५]स्यात्पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ ५ ॥
उलूके करिणः पुच्छमूलोपान्ते च [६]पेचकः ।
कमण्डलौ च [७]करकः सुगते च [८]विनायकः ॥ ६ ॥
[९]किष्कुर्हस्ते वितस्तौ च शूककीटे च [१०]वृश्चिकः ।
[११]प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥ ७ ॥
[१२]स्याद्भूतिकं तु भूनिम्बे कत्तृणो भूस्तृणोऽपि च ॥
ज्योत्स्निकायां च घोषे च [१३]कोशातक्यथ कटफले॥८॥
सिते च खदिरे [१४]सोमवल्कः स्यादथ सिह्लके ।

---

१ नागवर्धक्योस्तक्षक । २ स्फटिकसूर्ययोरर्कः । ३ क इत्येकं वायुब्रह्मसूर्येषु । ४ शिरोजलयोः कमिति क्लीवम् । ५ तुच्छधान्ये संक्षेपे भक्तसिक्थके पुलाकः । ६ हस्तिपुच्छमूले च पेचकः । ७ करक इति कमण्डलुवर्षोपलयोः । विनायकशब्दः सुगत विघ्नराजे गरुडे च वर्तते । ९ किष्कुशब्दो हस्तवितस्त्योर्वर्तते । १० शूके कीटे कर्कटे कीटविशेषेऽश्मराशौ च वृश्चिकः । ११ प्रतीक प्रतिकूलवाची । १२ भूनिम्बे कत्तृणे भूस्तृणे भूतिकमिति । १३ ज्योत्स्निकायां घोषे च कोशातकी । १४ कट्फले श्वेतखदिरे सोमवल्कः ।

१उपशायो विशायश्च पर्यायशयनार्थकौ ।
२अर्तनं ऋतीया च हृणीया च घृणार्थकाः ॥ ३२ ॥
३स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।
४पर्ययोऽतिऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥
५प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् ।
६स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ॥ ३४॥
निधाय तक्ष्यते यत्र काष्ठे काष्ठं स ७उद्घनः ।
८स्तम्भघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ॥ ३५ ॥
९आविधो विध्यते येन तत्र विष्वक्समे १०निव्यधः ॥
११उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥३६॥
( १२निगारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु )

---

१ द्वे पर्यायेण शयनस्य । २ चत्वारि घृणायाः । ३ चत्वारि व्यतिक्रमस्य । ४ चत्वारि अतिक्रमस्य । ५ एकं समाहूय यत्र भृत्यादीनां प्रेषणं तत्र प्रतिशासनं स्यात् । ६ एकं क्रतुषु द्विजन्मनां स्तुतिभूमौ । ७ यत्काष्ठे काष्ठं निधाय तक्ष्यते तस्मिन् काष्ठरूपे आधारे एकं । ८ द्वे स्तम्बघ्नस्य । ९ येन विध्यते तत्र कठारी आविध इत्येकम् । १० सर्वतः समाने द्वे निव इति । ११ द्वे निकारस्य । १२ चत्वारि गरणादिषु भक्षणादिविषये ।

[1]आरत्यवरति विरतय उपरामेऽथा स्त्रियान्तु [2]निष्ठेवः ।
निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि ॥ ३७ ॥
[3]जवने जूतिः [4]सातिस्त्ववसाने स्यादथः [5]ज्वरे जूर्तिः ॥
[6]उदजस्तु [7]पशुप्रेरणमकरणिरित्यादयः शापे ॥ ३८ ॥
गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् ॥
[9]आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ॥ ३९ ॥
माणवानां तु [10]माणव्यं सहायानां [11]सहायता ॥
[12]हल्या हलानां [13]ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ॥४०॥
द्वे पर्शुकानां पृष्ठानां [14]पार्श्वं [15]पृष्ठ्यमनुक्रमात् ॥
खलानां [16]खलिनी खल्याप्यथ [17]मानुष्यकं नृणाम् ॥४१

---

१ चत्वार्युपरतेः । २ चत्वारि मुखेन श्लेष्मोत्सर्गस्य ३ द्वे वेगस्य । ४ द्वे ऽन्तस्य । ५ द्वे ज्वरस्य । ६ पशूनां प्रेरणमुदजः स्यात् । शापे आक्रोशे योग्ये अकरणिरित्यादयः शब्दाः । ८ गोत्रान्तेभ्य औपगवादिशब्देभ्यस्तस्य वृन्दमित्यर्थे औपगवकादिकं स्यात् । ९ अचेतसाम् अप्राणिनां समूहस्य । १० एकम् बालक समूहस्य । ११ एकं सहाय समूहस्य । १२ हलानां समूहस्य । १३ द्वे ब्राह्मणसमूहस्य । १४ एकं अस्थिविशेष समूहस्य । १५ पृष्ठानां समूहस्य । १६ द्वे खलानां समूहस्य । १७ एकं मनुष्याणां

[1]पेटकस्त्रिषु वृन्देऽपि गुरौ देश्ये च [2]देशिकः ।
[3]खेटकौ ग्रामफलकौ धीवरेऽपि च [4]जालिकः ॥ ३ ॥
पुष्परेणौ च [5]किञ्जल्कः [6]शुल्कोऽस्त्री स्त्रीधनेऽपि च ।
[7]स्यात्कल्लोलेऽप्युत्कलिका [8]वार्धकं भाववृन्दयोः ॥४॥
कणिकायां चापि [9]घणिका [10]दारकौ बालभेदकौ ।
[11]अन्धेऽप्यनेडमूकः [12]स्याट्टङ्को दर्पाश्मदारणौ ॥ ५ ॥

इति कान्ताः ॥

[13]मयूरवर्हिवट्करज्वालास्वलिवायां [14]शिखीमुखौ ।
[15]शङ्खो निधौ ललाटास्थिकम्बौ न स्त्रीन्द्रियेऽपि [16]खम् [17]
घृणिज्वाले अपि [18]शिखे इति खान्तः ।
[19]शैलवृक्षौ नगावगौ ॥

---

१ एवं वृन्देऽस्त्रिषु च । २ एवं गुरौ देश्ये च । ३ एवं ग्रामफलकयोः । ४ एवं धीवरे स्वार्थे च । ५ एवं पुष्परेणौ । ६ एवं स्त्रीधने । ७ एवं कल्लोले सङ्गीते च । ८ एवं भाववृन्दयोः । ९ एवं कणिकायां च [illegible] । १० एवं बालभेदके । ११ एवं अन्धेऽनेडमूके च । १२ एवं दर्पाश्मदारणे । १३ एवं शिखिकरज्वालासु । १४ एवं शिखीमुखौ । १५ निधौ ललाटास्थ्नि । १६ एवं इन्द्रियेऽपि [illegible] च । १७ एवं किरणे ज्वालायां [illegible] च । १८ एवं नगौ [illegible] च । [illegible]

[1]आशुगौ वायुविशिखौ शरार्कविहगाः [2]खगाः ॥१९॥
[3]पतङ्गौ पक्षिसूर्यौ च [4]पूगः क्रमुकवृन्दयोः ।
पशवोऽपि मृगा [5]वेगः [6]प्रवाहजवयोरपि ॥ २० ॥
[7]परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ।
गजेऽपि [8]नागमातङ्गावपाङ्गस्तिलकेऽपि [9]च ॥ २१ ॥
[10]सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ।
[11]योगः संनहनोपायध्यानसंगतियुक्तिषु ॥ २२ ॥
[12]भोगः सुखे [13]स्त्र्यादिभृतावहेश्च फणकाययोः ।
चातके हरिणे पुंसि [14]सारङ्गः शबले त्रिषु ॥ २३ ॥
कपौ च [15]प्लवगः [16]शापे त्वभिषङ्गः पराभवे ।

---

१ एकं वायुविशिखयोः । २ एवं शरार्कविहगेषु । ३ एवं पक्षिसूर्यशालिप्रभेदस्य । ४ एकं क्रमुकवृन्दयो । ५ एकः पशुमृगशीघ्रमार्गणानां वाचक । ६ एकं प्रवाह, जवे मलबहिर्निर्गमे च । ७ एकं पुष्परेणौ, स्नानीये गन्धचूर्णे, कर्पूरादिचूर्णे, उपरागे रजसि च । ८ एकं गजस्य । नागकेशरनागवल्लीहस्तिनपुरमुस्तकादौ च । ( मातङ्ग ) चाण्डालेऽपि । ९ एकं नेत्रेऽन्ते तिलके । १० एकम् स्वभाव निर्मोक्षनिश्चयाध्यायसृष्टिषु वर्तते । ११ एकं संनहनोपायध्यानसंगतियुक्तिषु वर्तते । १२ एकं सुखस्त्र्यादि भोगयोः आदिशब्दादन्नपानादिकं प्राणी भृती पालने भरणे च । १३ एकम् सर्पफणाशरीरयोः । १४ चातके हरिणे शबले । १५ कपौ चकारात् भेकसारथ्यादौ १६ एकं । शापे, आक्रोशे, पराभवे, तिरस्कारे च ।

तिलकल्के च [1]पिण्याको [2]बाह्लीकं रामठेऽपि च ॥९॥
महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः[3]।
[4]रुक्तापशङ्कास्वातङ्कः स्वल्पेऽपि [5]क्षुल्लकस्त्रिषु ॥१०॥
[6]जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य [7]वर्तकः।
व्याघ्रेऽपि [8]पुण्डरीको ना यवान्यामपि दीपकः[9] ॥११॥
[10]शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि [11]गैरिकम् ॥
पीडार्थेऽपि व्यलीकं [12]स्यादलीकं [13]त्वप्रियेऽनृते ॥१२॥
शीलान्वयावनूके द्वे [14]शल्के [15]शकलवल्कले।
साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ १३ ॥
दीनारेऽपि च [16]निष्कोऽस्त्री [17]कल्कोऽस्त्री शमलैनसोः

---

1 पिण्डके तिलकल्के निःस्नेहतिलचूर्णे च पिण्याकः। २ रामठे हिङ्गुवृक्षे बाह्लीके देशेऽश्वे धीरे च बाह्लीकमिति। ३ कौशिकः महेन्द्रे गुग्गुलौ उलूके व्यालग्राहिषु च। ४ आतङ्कशब्दो रुक्तापशङ्कासु। ५ क्षुल्लकः स्वल्पे नीचकनिष्ठदरिद्रेष्वपि। ६ जैवातृकः शशाङ्के कृशे च। ७ वर्तकः अश्वखुरे पक्षिभेदे च। ८ पुण्डरीकशब्दो व्याघ्रे अग्नौ दिग्गजादौ च वर्तते। ९ दीपकः यवान्यां वह्निपूते प्रकाशके च। १० शालावृकाः कपिक्रोष्टुश्वानः। ११ गैरिकं स्वर्णे च। १२ व्यलीकम् पीडार्थे वैलक्ष्ये च। १३ अलीकम् अप्रियेऽनृते च १४ एवं शकलवल्कले १५ एवं शकलवल्कलयोः १६ एवं साष्टे शते, हेम्नि, उरोभूषणे, सुवर्णे पले, १७ एवं शमलैनसोः दम्भे च

दम्भेऽप्यथ [1]पिनाकोऽस्त्री शूलशंकरधन्वनोः ॥ १४ ॥
[2]धेनुका तु करेण्वाञ्च मेघजाले च [3]कालिका ।
[4]कारिका यातनावृत्त्योः [5]कर्णिका कर्णभूषणे ॥ १५ ॥
[6]करिहस्तेऽङ्गुलौ पद्मबीजकोश्यां त्रिपूत्तरे ।
वृन्दारकौ रूपिमुख्यावेके [7]मुख्यान्यकेवलाः ॥ १६ ॥
स्याद्दाम्भिकः [8]कौक्कुटिको याश्चदूरेरितेक्षणः ।
[9]लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्चयः ॥ १७ ॥
( भूनितम्बवलयचक्रेषु [10]कटकोऽस्त्रियाम् ।
सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च [11]कण्टकः ॥ १ ॥
[12]पाको पक्तिशिशू मध्यरत्ने नेतरि [13]नायकः ।
[14]पर्यङ्कः स्यात्परिकरे स्याद्व्याघ्रेऽपि च [15]तुरुष्कः २

---

१ एकं शूलशंकरधन्वनोः । २ एकं हस्तिन्यां नवप्रसूतायां गवि च । ३ एकं मेघजाले देवताविशेषेऽपि । ४ एकं यातनायां वृत्तौ च । ५ एकं करिहस्ताङ्गुलौ पद्मबीजकोश्यां च । ६ एकं रूपमुख्ययोः । ७ एकं मुख्येऽन्ये केवले च । ८ एकं दाम्भिकातिदूरेरितलक्षणयोः । ९ एकं प्रभोर्भालदर्शिकार्याक्षमयोः । १० एकं पर्वत. श्री कण्ठः मध्यभागे, करभूषणे चक्रे च । ११ एकं सूच्याग्रभागे, क्षुद्रशत्रौ, रोमहर्षे च । १२ एकं पाकक्रियाबालकयोः । १३ एकं मध्यरत्ने नेतरि च । १४ एकं परिकरस्य । १५ एकं व्याघ्रे तन्त्रिमे च ।

संज्ञा [1]स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ॥ ३४ ॥
काकेभगण्डौ [2]करटौ गजगण्डकटी कटौ[3] ॥
[4]शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥ ३५ ॥
देवशिल्पिन्यपि [5]त्वष्टा दिष्टं दैवेऽपि न द्वयोः ॥
रसे [7]कटुः [8]कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ ३६ ॥
रिष्टं [9]क्षेमाशुभाभावेष्वरिष्टे [10]तु [10]शुभाशुभे ।
मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥ ३७ ॥
अयोघने शैलशृङ्गे सीराङ्गे [11]कूटमस्त्रियाम् ।
सूक्ष्मैलायां[12]त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेऽपि सा ॥ ३८
आयुत्कर्षाश्रयः कोट्यो मूले लग्नकचे जटा[12] ॥

---

१ चेतना नाम धीरभिधानं हस्ताद्यैरर्थसूचनायामपि । २ काके इभगण्डे च । ३ गजगण्डे कट्यां च । ४ खल्वाटे दशा (निष्केश शिरसि) । दुश्चर्मणि महेश्वरे च । ५ देवशिल्पिनि देवकर्मणि अभिधानान्तरभेदे ... च । ६ दैवे प्रतिकर्मणि । ७ तिक्तलवणादिरसभेदे । ८ अकार्ये करणीये (कटु) क्लीबम् । मत्सरतीक्ष्णयोः । ९ क्षेमे अशुभे अमङ्गले ... अभावे । १० शुभे अशुभे च । सूतिकागृहम् । ११ मायादिषु ... । १२ सूक्ष्मैलायां काले अल्पे संशये सन्देहे । १३ अतिशयोत्कर्षः, उत्कर्षे कोटौ ... अपि । १४ मूले लग्नकचे संश्लिष्ट केशे जटामांसी वेदविशेषे च ।

व्युष्टिः [1]फले समृद्धौ च [2]दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥३९॥
[3]इष्टिर्यागेच्छयोः [4]सृष्टं निश्चिते बहुनि त्रिषु ।
[5]कष्टे तु कृच्छ्रगहने दक्षामन्दागदेषु च ॥ ४० ॥
[6]पटू द्वौ वाच्यलिङ्गौ च नीलकण्ठः [7]शिवेऽपि च ।
पुंसि [8]कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ॥ ४१ ॥
निष्ठा [9]निष्पत्तिनाशान्ताः [10]काष्ठोत्कर्षे स्थितौ दिशि ।
त्रिषु [11]ज्येष्ठोऽतिशस्तेऽपि [12]कनिष्ठोऽतियुवाल्पयोः ॥
[13]दण्डोऽस्त्री लगुडेऽपि स्याद्गुडो [14]गोलेक्षुपाकयोः ।
सर्पमांसात्पशू व्याडौ [15]गोभृद्वाचस्त्विडा इलाः[16] ॥४२॥

यानाद्यङ्गे [1]युगः पुंसि [2]युगं युग्मे कृतादिषु ॥२४॥
स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ।
लक्ष्यदृष्ट्या स्त्रियां पुंसि [3]गौर्लिङ्गं [4]चिन्हशेफसोः ॥२५॥
[5]शृङ्गं प्राधान्यसान्वोश्च [6]वराङ्गं मूर्धगुह्ययोः ।
[7]भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्त्तिषु ॥२६॥

इति गान्ताः ॥

[8]परिघः परिघातेऽस्त्रेऽप्यथोघो [9]वृन्देऽम्भसां रये ।
मूल्ये [10] पूजाविधावर्घोऽहो [11]दुःखव्यसनेष्वघम् ॥२७॥
त्रिष्विष्टेऽल्पे [12]लघुः इति घान्ताः ।
काचाः [13]शिक्यमृद्भेदृग्रुजः ।
विपर्यासे विस्तरे च [14]प्रपञ्चः पावके शुचिः ॥ २८ ॥

---

१ एकं रथाद्यङ्गावयवे । २ एकं युग्मे द्वये कृतादि त्रेतादियुगचतुष्टये, अंशे पद्मभेदे च । ३ एकं स्वर्गाद्यर्थे । ४ एकं चिन्हे शेफसि च ५ एकं प्रभुत्वशिखरयोः । ६ एकं मूर्द्धनि योनौ च । ७ एकं सम्पदिच्छैश्वर्यवीर्ययत्नसूर्ययशस्सु । ८ एकं परिघातेऽस्त्रे लोहमय लगुडे । ९ एकं समूहे जलप्रवाहे च । १० एकं मूल्ये पराये पूजाविधौ पूजोपहारे च । ११ एकम् पापे जरामरणादौ मृगयाद्युतादौ च । १२ एकं इष्टे अल्पे च । १३ एकं शिक्ये मृद्भेदे नेत्ररोगे च । १४ एकं वैपरीत्ये विस्तरे प्रतारणे च । १५ एकं अग्नौ । अपरश्चितं अनुपहते मेध्ये पवित्रे सित शुक्ले च ।

व्युष्टिः [1]फले समृद्धौ च [2]दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥३९॥
[3]इष्टिर्यागेच्छयोः [4]सृष्टं निश्चिते बहुनि त्रिषु ।
कष्टे[5] तु कृच्छ्रगहने दक्षामन्दागदेषु च ॥ ४० ॥
[6]पटु द्वौ वाच्यलिङ्गौ च नीलकण्ठः [7]शिवेऽपि वा ॥
पुंसि [8]कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ॥ ४१ ॥
निष्ठा [9]निष्पत्तिनाशान्ता [10]काष्ठोत्कर्षे स्थितौ दिशि ।
त्रिषु [11]ज्येष्ठोऽतिशस्तेऽपि [12]कनिष्ठोऽतियुवाल्पयोः ॥
[13]दण्डोऽस्त्री लगुडेऽपि स्याद्गुडको [14]गोलेक्षुपाकयोः ॥
सर्पमांसात्पशू व्याडौ [15]गोभूवाचस्त्विडा इलाः[16] ॥४२॥

---

१ साध्ये समृद्धौ सम्पदि । २ ज्ञाने चक्षुषि दर्शने च । ३ यागेच्छयोरिष्टशब्दः । ४ निश्चिते बहुनि । ५ प्रचुरे गहने दुरधिगम प्रान्ते च । ६ दक्षेऽनलसे अमन्दे तीक्ष्णे अगदे रोगहीने च द्व पटुशब्दौ वाच्यलिङ्गौ । ७ शिवेऽपि चन्द्रामयूरेऽपि । ८ जठरान्तरे कुसूले धान्यागारे अन्तर्गृहे गृहाभ्यन्तरे च । ९ अदर्शने प्रत्यक्षने च । १० उत्कर्षे स्थितौ मर्यादायां दिशि च । ११ अतिशस्ते अतिशस्तेऽपि ज्येष्ठो वृद्धे अग्रजे माति च । १२ अति युवि बालेऽल्पायां अनुजेऽपि । १३ लगुडे अविवेका दमेऽपि । १४ गोले भक्षादिगुडके इक्षुपाके । गुडः इक्षु विकार. एतयोः । १५ सर्पे व्याघ्रा व्याडः १६ गोभूर्वाक् एते इडाः ) ( इलाः ) डलयोरैक्यात् ।

यानाद्यङ्गे १युगः पुंसि २युगं युग्मे कृतादिषु ॥२४॥
स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ।
लक्ष्यदृष्ट्या स्त्रियां पुंसि ३गौर्लिङ्गं ४चिन्हशेफसोः ॥२५॥
५शृङ्गं प्राधान्यसान्वोश्च ६वराङ्गं मूर्धगुह्ययोः ।
७भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥२६॥

इति गान्ताः ॥

८परिघः परिघातेऽस्त्रे ऽप्योघो ९वृन्देऽम्भसां रये ।
मूल्ये १० पूजाविधावर्घोऽहो ११दुःखव्यसनेष्वघम् ॥२७॥
त्रिष्विष्टेऽल्पे १२लघुः इति घान्ताः ।
काचाः १३शिक्यमृद्भेददृग्रुजः ।
विपर्यात विस्तरे च १४प्रपञ्चः पावके शुचिः ॥ २८ ॥

---

१ एकं रथशकटाद्यवयवे । २ एकं युग्मे द्वये कृतादि त्रेतादियुगचतुष्टये, ओषधिभेदे च । ३ एकं स्वर्गादिषु । ४ एकं चिन्हे शेफसि च ५ एकं प्रभुत्वशिखरयोः । ६ एकं मूर्द्धनि योनौ च । ७ एकं सम्पदिच्छैश्वर्यवीर्ययत्नसूर्ययशस्सु । ८ एकं परिघातेऽस्त्रे लोहमय लगुडे । ९ एकं समूहे जलप्रवाहे च । १० एकं मूल्ये पराये पूजार्थं निर्वा पूजोपहारे च । ११ एकम पापे जरामरणादौ मृगयाद्यतादौ च । १२ एकं इष्टे अल्पे च । १३ एकं शिक्ये मृद्विशेषे नेत्ररोगे च । १४ एकं वैपरीत्ये विस्तरे प्रतारणे च । १५ एकं आर्ने । सप्त,दशशुचिरे अत्युष्णे मैद्ये पवित्रे सित शुक्ले च ।

माल्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु ।
अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः[1] स्त्रियाम् २९
[2]प्रसन्ने भल्लुकेऽप्यच्छो [3]गुच्छः स्तबकहारयोः ॥
परिधानाञ्चले कच्छो [4]जलप्रान्ते त्रिलिङ्गकः ॥ ३० ॥
[5]केकिताक्ष्यावहिभुजौ दन्तविप्राण्डजाः द्विजाः[6] ॥
[7]अजा विष्णुहरच्छागा [8]गोष्ठाध्वनिवहा व्रजाः ॥ ३१ ॥
[9]धर्मराजौ जिनयमौ कुञ्जो [10]दन्तेऽपि न स्त्रियाम् ॥
[11]बलजे क्षेत्रपूर्द्वारे बलजा [12]वल्गुदर्शना ॥ ३२ ॥
समे क्ष्मांशे रणेऽप्याजिः[13] [14]प्रजा स्यात्सन्ततौ जने ।
[15]अब्जौ शङ्खशशाङ्कौ च [16]स्वके नित्ये निजं त्रिषु ३३
पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः ।

---

१ एवं अभिष्वङ्गे स्पृहायामत्यासक्तौ, गभस्तौ किरणे दीप्तौ शोभायां २ एवं प्रसन्ने भल्लुके च वर्तते । ३ एवं स्तबके हारे च । ४ एवं परिधानाञ्चले परिधानीय वस्त्राञ्चलभागे जलप्रान्ते च वर्तते । ५ सर्पभक्षस्य । ६ ( द्विजशब्दः ) दन्तविप्राण्डजवाचकः । ७ ( अजशब्दः ) विष्णुहरच्छागवाचकाः । ८ गोस्थान मार्गसमूह ( व्रजशब्दवाच्याः ) । ९ बुद्धयमौ धर्मवाचकौ । १० हस्तिदन्तेऽपि शब्दोऽभिकुञ्जे च । ११ क्षेत्रे नगर द्वारे च । १२ मधुरदर्शना ( बलजा ) इत्युच्यते । १३ समे भूभागे युद्धे च । १४ सन्ताने लोके च । १५ शंख, चन्द्र, धात् धन्वन्तरी च । १६ स्वके आत्मीये, नित्ये चिरस्थिते च । १७ आत्मनि पुरुषे प्रवीणे तु वाच्यलिङ्गकः ।

क्ष्वेडा ¹वंशशलाकाऽपि नाडी ²नालेऽपि षट्क्षणे ।
³काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ।
⁴स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिक्धने ॥ ४३ ॥

इति डान्ताः ।

भृशप्रतिज्ञयोर्बाढं प्रगाढं ⁶ भृशकृच्छ्रयोः ।
शक्तस्थूलौ त्रिषु दृढौ ⁷व्यूढौ ⁸विन्यस्तसंहतौ ॥ ४४ ॥

इति ढान्ताः ।

⁹भ्रूणोऽर्भके स्त्रैणगर्भे बाणो ¹⁰बलिसुते शरे ।
¹¹कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः¹² ॥४५॥
¹³पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ।
मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके गुणः¹⁴ ॥४६॥

---

वेणुशलाकायां विषे च । २ षट्क्षणमितकाले । नाले चिह्नमपि । ३ दण्डा-दिषु (काण्ड.) । ४ अश्वाभरणादिव्ये भाण्डम् । ५ अत्यर्थदृढप्रतिज्ञयोः (बाढम्) । ६ भृशे कृच्छ्रे दृढे च [प्रगाढम्] । ७ समर्थे स्थूले च [दृढ] । ८ विन्यस्ते [व्यूढ.] । ९ बाले स्त्रीगर्भे च । १० बलिपुत्रे शरे च (बाण.) । ११ अतिसूक्ष्मवस्तुनि धान्यांशे च (कण.) । १२ संघात समूह प्रमथे शिवानुचरे च (गणः) । १३ द्यूत क्रयविक्रयादिषु उत्सृष्टे न्यस्तार्थे भृतौ मूल्ये काकिणीचतुष्टये च । १४ (पणः) मौर्व्यां ज्यायां द्रव्याश्रिते रूपरसादौ । आदिशब्दात् सत्त्वरज आदौ, शौर्यचातुर्यादौ सन्धि-विग्रहादौ, इत्यादिषु च वर्तते ।

निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः [१] ।
[२]वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं [३] तु वाक्षरे ॥४७॥
अरुणो[४] भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ।
स्थाणुः [५]शर्वेऽप्यथ द्रोणः[६] काकेऽप्याजौ रवे रणः[७] ॥४८॥
ग्रामणी[८]र्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ।
[९]ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा[१०] भ्रुवोः ॥४९॥
हरिणी स्यान्मृगी [११]हेमप्रतिमा हरिता च या ।
त्रिषु पाण्डौ च हरिणः [१२]स्थूणा[१३] स्तम्भेऽपि वेश्मनः ॥५०
तृष्णे[१४] स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे [१५] ।

---

१ (क्षण) निर्व्यापारस्थितौ तूष्णीमवस्थाने, कालविशेषे मुहूर्तस्य द्वादशे भागे उत्सवे पुत्रजन्मादौ च वर्तते । २ [वर्णः] विप्रादौ, शुक्लपीतादौ स्तवने स्यात् । ३ अक्षरे (वर्णं) । ४ सूर्ये अतिवलात् सूर्यसारथ्यां च [अरुणः] अरुणवर्ण शब्दो वर्णभेदेऽपि । त्रिलिङ्ग । ५ शिवे अचलशात् स्तम्भादौ च [स्थाणुः] । ६ काके अपि शब्दात् अश्वत्थाम्न, पितरि, परिमाणविशेषे च [द्रोणः] । ७ युद्धे शब्दे च [रणः] ८ श्रेष्ठे नापित ग्रामाधिपे च [ग्रामणी] ९ मेषादिलोम [ऊर्णा] १० आवर्ते भ्रुवोरेच [अंतरा] । ११ मृगी, या प्रतिमा हरिता हरिद्वर्णा साच (मृगी) । १२ पाण्डुवर्णे वात् मृगभेदे च (हरिण) १३ गृहस्तम्भे अपिशब्दाल्लोहप्रतिमायां [स्थूणा] । १४ आकाङ्क्षायां पानेच्छायां च (तृष्णा) । १५ जुगुप्सा निन्दा करुणा च (घृणा) ।

वणिक्पथे च विपणिः [1]सुरा प्रत्यक् च वारुणी[2] ॥ ५१॥
[3]करेणुरिभ्यां स्त्री नेभे द्रविणं [4]तु बलं धनम् ।
[5]शरणं गृहरक्षित्रोः श्रीपर्णं [6]कमलेऽपि च ॥ ५२॥
विषाभिमरलोहेषु तीक्ष्णं [7]क्लीबे खरे त्रिषु ।
[8]प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ॥ ५३ ॥
करणं [9]साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ।
प्राण्युत्पादे [10]संसरणमसंबाधचमूगतौ ॥ ५४ ॥
घण्टापथेऽथ वान्तान्ने [11]समुद्गिरणमुन्नये ।
अतस्त्रिषु [12]विषाणं स्यात्पशुशृङ्गेभदन्तयोः ॥ ५५॥

---

१ पण्यवीथ्यां चात् पथ्ये च (विपणिः)। २ मद्यम्, प्रतीची दिक् च [वारुणी]। ३ हस्त्यां हस्तिन्यां (करेणु) स्त्री। इभे हस्तिनि (करेणुः) न पुंलिङ्गः। ४ पराक्रमः धनं च [द्रविणम्]। ५ गृहे रक्षितरि च (शरणम्)। ६ कमले चात् अग्निमन्थे च (श्रीपर्णम्)। ७ विषे अभिमरे युद्धे लोहे च (तीक्ष्णम्) खरे तीक्ष्णे च (तीक्ष्ण शब्दः) त्रिलिङ्गः। ८ हेतौ मर्यादायां शास्त्रे इयत्तायां प्रमातरि च (प्रमाणम्)। ९ साधकतमम् (करणम्)। क्षेत्रे गात्रे इन्द्रिये च (करणशब्दः)। १० प्राणिनां जननि निराबाधे गमने घण्टापथे च (संसरणम्)। ११ भुक्तोद्गीर्णान्ने वान्ताशादस्य वमने उन्नये च (समुद्गिरणम्)। १२ पशोः शृङ्गे हस्तिदन्ते च (विषाणम्)।

प्रवणं [१]क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे।
संकीर्णो [२]निचिताशुद्धाविरिणं शून्यमूषरम् ॥५६॥
‘सेतौ च वर्णो[४] वेणी[५] नदीभेदे कचोच्चये’

॥ इति णान्ताः ॥

‘[६]देवसूर्यौ विवस्वन्तौ सरस्वन्तौ[७] नदार्णवौ ॥
पक्षितार्क्ष्यौ गरुत्मन्तौ[८] शकुन्तौ[९] भासपक्षिणौ ॥५७॥
अग्न्युत्पातौ धूमकेतु [१०]जीमूतौ[११] मेघपर्वतौ ॥
[११]हस्तौ तु पाणिनक्षत्रे मरुतौ[१२] पवनामरौ ॥५८॥
[१४]यन्ता हस्तिपके सूते भर्ता[१५] धातरि पोष्टरि ॥
यानपात्रे शिशौ पोतः[१६]प्रेतः[१७] प्राण्यन्तरेमृते ॥५९॥
ग्रहभेदे ध्वजे केतुः[१८] पार्थिवे तनये सुतः[१९] ॥

स्थपतिः[1] कारुभेदेऽपि [2]भूभृद् भिधरे नृपे ॥ ६० ॥
[3]मूर्धाभिषिक्तो भूपेऽपित्रातुः[4]स्त्रीकुसुमेऽपि च ॥
विष्णावप्यजिताव्यक्तौ[5] सूनस्त्वष्टरि[6] सारथौ ॥ ६१ ॥
व्यक्तः[7] प्राज्ञेऽपि [8]दृष्टान्तावुभौ शास्त्रनिदर्शने ॥
क्षत्ता[9] स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ॥ ६२ ॥
वृत्तान्तः[10] स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ॥
आनर्तः [11]समरे नृत्यस्थाननीवृद्विशेषयोः ॥ ६३ ॥
कृतान्तो[12] यमसिद्धान्त दैवाकुशलकर्मसु ॥
श्लेष्मादि[13]रसरक्तादि महाभूतानि तद्गुणाः ॥ ६४ ॥
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥

---

१ [ स्थपति. ] कारु० कञ्चुकी जीवोऽयाजकश्च । २ ( भूधर ) पर्वतः राजा च । ३ ( मूर्धाभिषिक्तः ) मूर्धः प्रधानः क्षत्रि मात्रे च । ४ ऋतु) नीरज- हैमन्तादिश्च । ५ अजिताव्यक्तशब्दौ ) विष्णुवाचकौ । ६ [सूत ] त्वष्टसारथिश्च । ७ ( व्यक्तः ) प्राज्ञः स्फुटश्च । ८ शास्त्रे तर्कादौ निदर्शने । उदाहरणे च ( दृष्टान्तशब्दः ) । ९ ( क्षत्ता ) सारथि । द्वाःस्थो द्वारपाल । क्षत्रिया- या शूद्राज्जातश्च । १० ( वृत्तान्तः ) प्रस्ताव भावे साकल्ये जनश्रुतौ च । ११ ( आनर्तः ) युद्धे नृत्यशालने जनपदविशेषे च । १२ [ कृतान्त. ] यमः सिद्धान्तः प्राक्तनकर्म पापं च । १३ श्लेष्मादि शब्दयोनिपर्यन्त ( धातवः ) ।

प्रवणं [1]क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे।
संकीर्णौ [2]निचिताशुद्धाविरिणं शून्यमूषरम् ॥२६॥
'सेतौ च वरणो[4] वेणी[5] नदीभेदे कचोच्चये'
॥ इति णान्ताः ॥
[6]देवसूर्यौ विवस्वन्तौ सरस्वन्तौ[7] नदार्णवौ ॥
पक्षितार्क्ष्यौ गरुत्मन्तौ[8] शकुन्तौ[9] भासपक्षिणौ ॥२७॥
अग्न्युत्पातौ धूमकेतु [10]जीमूतौ[11] मेघपर्वतौ ॥
[12]हस्तौ तु पाणिन क्षत्रे मरुतौ[13] पवनामरौ ॥ २८॥
[14]यन्ता हस्तिपके सूते भर्ता[15] धातरि पोष्टरि ॥
यानपात्रे शिशौ पोतः[16]प्रेतः[17] प्राण्यन्तरे मृते ॥२९॥
ग्रहभेदे ध्वजे केतुः[18] पार्थिवे तनये सुतः[19] ॥

---

१ क्रमशो निम्नायां भुवि नते चतुष्पथे च (प्रवणः)। २ व्याप्ते अमिश्रे च (संकीर्णः)। ३ शून्ये ऊषरे च (इरिणम्)। ४ सेतौ (वरणः)। ५ नदी केशसमूहे च (वेणी)। ६ देवे सूर्ये च (विवस्वान्)। ७ नदे च अर्णवे च (सरस्वान्)। ८ पक्षी तार्क्ष्यश्च (गरुत्मान्)। ९ भासः पक्षी च शकुन्तौ। १० (धूमकेतु) अग्न उत्पात च। ११ (जीमूतः) मेघे पर्वते च। १२ (हस्तः) करे नक्षत्रे च। १३ मरुत्) पवन अमरश्च १४ (यन्ता) हस्तिपकः सूतश्च। १५ (भर्ता) धातरि पोष्टरि च। १६ (पोतः) नौ शिशुश्च। १७ (प्रेतः) ...

स्थपतिः[1] कारुभेदेऽपि [2]भूभृद्भूमिधरे नृपे ॥ ६० ॥
[3]मूर्धाभिषिक्तो भूपेऽपि ऋतुः[4] स्त्रीकुसुमेऽपि च ॥
विष्णावप्यजिताव्यक्तौ[5] सूतस्त्वष्टरि[6] सारथौ ॥ ६१ ॥
व्यक्तः[7] प्राज्ञेऽपि [8]दृष्टान्तावुभौ शास्त्रनिदर्शने ॥
क्षत्ता[9] स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ॥ ६२ ॥
वृत्तान्तः[10] स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ॥
आनर्तः [11]समरे नृत्यस्थाननीवृद्विशेषयोः ॥ ६३ ॥
कृतान्तो[12] यमसिद्धान्तदैवाकुशलकर्मसु ॥
श्लेष्मादि[13]रसरक्तादि महाभूतानि तद्गुणाः ॥ ६४ ॥
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥

---

१ [स्थपतिः] कारुः कञ्चुकी जीवेष्टियाजकश्च । २ (भूभृत्) पर्वतः राजा च । ३ (मूर्धाभिषिक्तः) मुख्यः प्रधानः क्षत्रिः मन्त्री च । ४ (ऋतु) र्नारीरजः हेमन्तादिश्च । ५ अजिताव्यक्तशब्दौ विष्णुवाचकौ । ६ [सूत] त्वष्टा सारथिश्च । ७ (व्यक्तः) प्राज्ञः स्फुटश्च । ८ शास्त्रे तर्कादौ निदर्शने । उदाहरणे च (दृष्टान्तशब्दः) । ९ (क्षत्ता) सारथिः । द्वाःस्थो द्वारपालः । क्षत्रियायां शूद्राज्जातश्च । १० (वृत्तान्तः) प्रस्ताव भावे साकल्ये जनश्रुतौ च । ११ (आनर्तः) युद्धे नृत्यस्थाने जनपदविशेषे च । १२ [कृतान्तः] यमः सिद्धान्तः अकुशलकर्म पापं च । १३ श्लेष्मादि शब्दो निर्दिष्ट (धातवः) ।

कक्षांतरेऽपि शुद्धान्तो[1] नृपस्यासर्वगोचरे ॥ ६५ ॥
कासूसामर्थ्ययोः[2] शक्तिर्मूर्तिः[3] काठिन्यकाययोः ॥
विस्तारवल्ल्योर्[4]व्रततिर्वसती[5] रात्रि वेश्मनोः ॥ ६६ ॥
क्षयार्चयोरपचितिः[6] [7]सातिर्दानावसानयोः ॥
अर्तिः[8] पीडाधनुष्कोट्योर्जातिः[9] सामान्यजन्मनोः ६७
प्रचारस्यन्दयो[10] रीति[11] ईतिर्डिम्बप्रवासयोः ॥
उदयेऽधिगमे[12] प्राप्तिस्त्रेता[13]त्वग्नित्रये, युगे ॥ ६८ ॥
वीणाभेदेऽपि महती[14] भूति[15] भस्मनि संपदि ॥
नदीनगर्योर्नागानां[16] भोगवत्यथ सङ्गरे ॥ ६९ ॥
सङ्गे सभायां समितिः[17] क्षयवासावपि क्षिती[18] ॥

---

१ नृपस्य राज्ञोऽसर्वगोचरेऽसर्वदृष्टे कक्षान्तरे राजस्थानविशेषे अपिशब्दात् अन्तःपुरे माधुर्यान्ते च ( शुद्धान्तः ) २ ( शक्तिः ) कासूनामायुधे सामर्थ्ये च । ३ [ मूर्तिः ] काठिन्ये काये च । ४ [ व्रततिः ] विस्तारे वल्ल्यां च । ५ [ वसतिः रात्रौ वसने च । ६ ( अपचितिः ) क्षये अर्चने च । ७ ( सातिः ) दाने अवसाने च । ८ [ अर्तिः ] पीडायां धनुष्कोट्यां च । ९ [ जातिः ] सामान्ये जन्मनि च । १० ( रीतिः ) प्रचारे स्यन्दे च । ११ ( ईतिः ] डिम्बप्रवासे च । १२ ( प्राप्तिः उदयेऽधिगमे च । १३ ( त्रेता ) अग्नित्रये युगे च । १४ [ महती ] वीणाभेदे महत्त्वयुक्तायां च । १५ [ भूतिः ] भस्मनि संपदि च १६ नद्यां नागनगर्यां च [ भोगवती ] । १७ [ समितिः ] सङ्गरे सङ्गे सभायां च । १८ ( क्षितिः )

रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः[1] ॥ ७० ॥
[2]जगती जगति च्छन्दोविशेषेऽपि क्षितावपि ॥
[3]पङ्क्तिश्छन्दोऽपि दशमं स्यात्प्रभावेऽपि चायतिः[4] ७१
[5]पत्तिर्गतौ च मूले तु पक्षतिः पक्षभेदयोः[6] ॥
[7]प्रकृतिर्योनिलिङ्गे च कैशिक्याद्याश्च वृत्तयः[8] ॥ ७२ ॥
[9]सिकताः स्युर्वालुकापि वेदे श्रवसि च श्रुतिः[10] ॥
[11]वनिता जनितात्यर्थानुरागायां च योषिति ॥ ७३ ॥
[12]गुप्तिः क्षितिव्युदासेऽपि [13]धृतिर्धारणधैर्ययोः ॥
[14]बृहती क्षुद्रवार्ताकीछन्दोभेदे महत्यपि ॥ ७४ ॥
[15]वासिता स्त्रीकरिण्योश्च[16]वार्ता वृत्तौ जनश्रुतौ ॥

---

१ [हेतिः] सूर्यांशौ शस्त्रे अग्निज्वालायां च। २ लोके छन्दोविशेषे भुवि च [जगती]। ३ दशमं छन्दः [पंक्तिः]। ४ प्रभावे उत्तरकाले च। [आयतिः]। ५ (पत्तिः) गतौ चान वीरभेदे सैन्यभेदे च। ६ (पक्षतिः) पक्षभेदयोः मासादेस्स च मूले च। ७ [प्रकृतिः] योनौ लिङ्गे च। ८ [वृत्तयः] कौशिक्यारभटीसात्वतीभारत्यः। ९ सिकता बालुकायाम् बालुकान्वितदेशे च। १० श्रुतिः] वेदे श्रवणेन्द्रिये च ११ [वनिता] [illegible] पतिस्त्रिया भवति। १२ द्वे गुप्तेः। १३ द्वे धृतेः। १४ [illegible]। १५ हस्तिन्यां वासिता। १६ द्वे वार्तायाः।

[1]वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च [2]घृतामृते ॥ ७५ ॥
[3]कलधौतं रूप्यहेम्नोर्निमित्तं [4]हेतुलक्ष्मणोः ॥
[5]श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः [6]कृतम् ॥ ७६ ॥
[7]अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥
युक्ते क्ष्मादावृते [8]भूतं प्राण्यतीते समे त्रिषु ॥ ७७ ॥
[9]वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥
[10]महद्राज्यं [11]चावगीतं जन्ये स्याद्गर्हिते त्रिषु ॥ ७८ ॥
[12]श्वेतं रूप्येऽपि [13]रजतं हेम्नि रूप्ये सिते त्रिषु ॥
त्रिष्वतो [14]जगदिङ्गेऽपि [15]रक्तं नील्यादिरागि च ७९
[16]अवदातः सिते पीते शुद्धे बद्धार्जुनौ [17]सितौ ॥
युक्तेऽतिसंस्कृते [18]मर्षिण्यभिनीतोऽथ [19]संस्कृतम् ॥ ८० ॥
कृत्रिमे लक्षणोपेतेऽप्यनन्तोऽ[20]नवधावपि ॥

---

१ द्वे वार्तस्य । २ घृतम् अमृतं च अम्बु । ३ द्वे कलधौतस्य । ४ द्वे निमित्तस्य ५ द्वे श्रुतस्य । ६ द्वे कृतस्य । ७ द्वे अत्याहितस्य । ८ त्रीणि, जन्तुसत्वसमानि च भूतस्य । ९ पञ्चवृत्तस्य । १० एवं महतः । ११ द्वे अवगीतस्य । १२ द्वे श्वेतस्य । १३ त्रीणि रजतस्य । १४ द्वे अंगमे भुवने च जगत् । १५ एवं रक्तस्य । १६ त्रीणि अवदातस्य । १७ द्वे सितस्य । १८ न्याय्ये भूषिते सन्तरि च अभिनीत । १९ कृत्रिमे धरादौ लक्षणोपेते शास्त्रे च संस्कृतम् २० निरवधौ शेषाद् चानन्तः ।

ख्याते हृष्टे [1]प्रतीतोऽभि [2]जातस्तु कुलजे बुधे ॥ ८२ ॥
[3]विविक्तौ पूतविजनौ [4]मूर्छितौ मूढसोच्छ्रयौ ॥
द्वौ चाम्लपुरुषौ [5]शुक्तौ [6]शितौ धवलमेचकौ ॥८३॥
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च [7]सत् ॥
पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते ॥ ८४ ॥
[8]निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥
जातोन्नद्धप्रवृद्धाः [10]स्युरुच्छ्रिता [11]उत्थितास्त्वमी ॥८५॥
वृद्धिमत्प्रोद्यतोत्पन्ना [12]आदृतौ सादरार्चितौ ॥

॥ इति तान्ताः ॥

[13]अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ॥ ८६ ॥
[14]निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ ॥
[15]समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हितेऽपि च ॥८७॥
[16]दशमीस्थौ क्षीणरागवृद्धौ [17]वीथी पदव्यपि ॥

---

१ प्रसिद्धे हृष्टे च प्रतीतः । २ कुलीने परिहृतेऽभिजातः । ३ द्वयं विविक्तस्य ४ द्वयं मूर्छितस्य । ५ द्वयं शुक्तस्य । ६ द्वे शितौ । ७ पञ्च सद्वाचि । ८ त्रिषु पुरस्कृतः । ९ उभौ निवातौ शस्त्राभेद्यं कवचञ्च निवातम् । १० त्रये उच्छ्रिताः । ११ त्रय उत्थिताः १२ द्वौ आदृतौ । १३ चतुर्षु विषये चार्थः । १४ चतुर्षु तीर्थंशब्दः । १५ त्रिषु समर्थः । १६ उभौ दशमीस्थौ । १७ मार्गः पंक्तिश्च वीथी ।

[१]आस्थानीयत्नयोरास्थाप्र[२]स्थोऽस्त्री सानुमानयोः ॥८७॥
[३]शास्त्रद्रविणयोर्ग्रन्थः संस्थाधारे स्थितौ [४]मृतौ ॥

॥ इति थान्ताः ॥

[५]अभिप्रायवशौ [६]छन्दावब्दौ जीमूतवत्सरौ ॥ ८८ ॥
[७]अपवादौ तु निन्दाज्ञे [८]दायादौ सुतबान्धवे ॥
[९]पादाः रश्म्यङ्घ्रितुर्यांशाश्चन्द्राग्न्यर्कास्तमोऽ[१०]नुदः॥८९॥
[११]निर्वादो जनवादेऽपि [१२]शादो जम्बालशष्पयोः ॥
आरावे रुदिते [१३]त्रातर्याक्रन्दो दारुणे रणे ॥ ९० ॥
[१४]स्यात्प्रसादोऽनुरागेऽपि [१५]सूदः स्याद्व्यञ्जनेऽपि च ॥
गोष्ठाध्यक्षेऽपि [१६]गोविन्दो हर्षेऽप्यामोदवन्मदः[१७]॥९१॥
प्राधान्ये राजलिङ्गे च वृषाङ्गे [१८]ककुदोऽस्त्रियाम् ॥
स्त्री [१९]संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ॥९२॥

---

१ द्वे आस्थायो. । २ द्वे प्रस्थस्य ३ द्वे ग्रन्थस्य मृतस्य । ५ द्वे छन्दसः । द्वे अब्दस्य । ७ द्वे अपवादस्य । ८ द्वे दायादस्य । ९ त्रीणि पादस्य । १० त्रीणि तम नुदः । ११ लोकापवादे निर्वीतवादे च १२ द्वे शादस्य । १३ चतुर्षु आक्रन्दः १४ अनुपदे प्रसन्नतायां काव्यगुणे च प्रसादः । १५ व्यंजने सूपकारे च सूदः । १६ गोशालायां वृद्धस्वर्गे कृष्णे च गोविन्दः । १७ एवं मदस्य । १८ त्रीणि ककुदस्यो १९ पञ्चसु संकेत च संवित् ।

घर्मे [1]रहस्युपनिषत्स्यादृतौ वत्सरे [2]शरत् ॥
[3]पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥ १३ ॥
गोष्पदं सेविते माने [4]प्रतिष्ठाकृत्यमास्पदम् ॥
त्रिष्विष्टमधुरौ [6]स्वादू [7]मृदूचातीक्ष्णकोमलौ ॥ १४ ॥
मूढाल्पापटुनिर्भाग्या [8]मन्दाः स्युर्द्वौ तु [9]शारदौ ॥
प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ [10]विशारदौ ॥ १५ ॥

॥ इति दान्ताः ॥

व्यामो [11]वटश्च [12]न्यग्रोधावुत्सेधः काय उन्नतिः ॥
पर्याहारश्च मार्गश्च [13]विवधौ वीवधौ च तौ ॥ १६ ॥
[14]परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ॥
बन्धकं व्यसनं [15]चेतःपीडाधिष्ठानमाधयः ॥ १७ ॥
स्युः समर्थननीवाकनियामाश्च [16]समाधयः ॥
[17]दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादिविनश्वरे ॥ १८ ॥

---

१ घर्मे रहसि वेदान्ते चोपनिषद् । २ द्वे शरदः । ३ षट् पदस्य । ४ द्वे गो पदस्य । ५ द्वे आस्पदस्य । ६ द्वे स्वादुनः । ७ द्वे मृदुनः ८ त्रीणि मन्दस्य । ९ द्वे शारदस्य । १० द्वे विशारदस्य । ११ द्वे न्यग्रोधस्य । १२ द्वे उत्सेधस्य । १३ द्वे [वी] वधस्य १४ द्वयोः परिधिः । १५ चत्वारि आधेः । त्रीणि समाधेः । १७ पञ्चाऽनुबन्धस्य ।

मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥
[1]विधुर्विष्णौ चन्द्रमसि [2]परिच्छेदे बिलेऽवधिः ॥ ९९ ॥
[3]विधिर्विधाने दैवेऽपि [4]प्रणिधिः प्रार्थने चरे ॥
[5]बुधवृद्धौ पण्डितेऽपि [6]स्कन्धः समुदयेऽपि च ॥१००॥
देशे नदविशेषेऽब्धौ [7]सिन्धुर्ना सरिति स्त्रियाम् ॥
[8]विधा विधौ प्रकारे च [9]साधू रम्येऽपि च त्रिषु ॥१०१॥
[10]वधूर्जाया स्नुषा स्त्री च [11]सुधा लेपोऽमृतं स्नुही ॥
[12]संधा प्रतिज्ञा मर्यादा [13]श्रद्धा संप्रत्ययः स्पृहा ॥१०२॥
[14]मधु मद्ये पुष्परसे क्षौद्रेऽप्यन्धं तमस्यपि ॥
अतस्त्रिषु [15]समुन्नद्धौ पण्डितम्मन्यगर्वितौ ॥ १०३ ॥
[16]ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथावलम्बितः ॥

---

१ द्वे विधोः । २ त्रीण्यवधेः । ३ त्रीणि विधेः । ४ द्वे प्रणिधेः । पंडितेऽपि बुधवृद्धशब्दौ । ५ समूहे काण्डे भूरुहे च स्कन्धः । ६ त्रीणि सिन्धोः । ७ द्वे विधायाः । ८ द्वौ साधुः पिके गमने च साधुः । ९ त्रीणि वध्वाः । १० द्वे सुधायाः । ११ द्वे संधायाः । १२ द्वे श्रद्धायाः । १३ त्रीणि मधुनः । १४ अन्धकारे चैतदीने चान्धशब्दः । १५ द्वे समुन्नद्धस्य । १६ द्वे ब्रह्मबन्धोः ।

[1]अविदूरोऽप्यवष्टब्ध. [2]प्रसिद्धौ ख्यातभूषितौ ॥१०४॥
॥ इति धान्ताः ॥
सूर्यवह्नी [3]चित्रभानू [4]भानू रश्मिदिवाकरौ ॥
भूतात्मानौ धातृदेहौ मूर्खनीचौ [5] पृथग्जनौ ॥१०५॥
ग्रावाणौ शैलपाषाणौ [7] पत्रिणौ शरपक्षिणौ ॥
तरुशैलौ [8]शिखरिणौ [9]शिखिनौ वह्निबर्हिणौ ॥१०६॥
[10]प्रतियत्नावुभौ लिप्सोपग्रहावथ [11]सादिनौ ॥
द्वौ सारथिहयारोहौ [12]वाजिनोऽश्वेषु पक्षिणः ॥१०७॥
[13]कुलेऽप्यभि जनौ जन्मभूम्यामप्यथ [14]हायनाः ॥
वर्षार्चिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का [15]विरोचनः ॥१०८॥
क्लेशेऽपि [16]वृजिनो [17]विश्वकर्मार्कसुरशिल्पिनोः ॥
आत्मा [18]यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च १०९
शक्रो घातुकमत्तेभो वर्षुकाब्दो [19]घनाघनः ॥

---

१ द्वे अवष्टब्धस्य । २ द्वे प्रथितस्य । ३ द्वे चित्रभानोः । ४ द्वे भानोः ।
५ पृथक् । ६ द्वे पृथग्जनस्य । ६ द्वे ग्राव्णः । ७ द्वे पत्रिणः । ८ द्वे शिखरिणः ।
९ शिखिनः । १० द्वे प्रयत्नस्य । ११ द्वे सादिनः । १२ त्रयो वाजिनः । १३ द्वे
अभिजनस्य । १४ त्रयो हायनाः । १५ चत्वारि विरोचनस्य । १६ द्वे वृजिनस्य ।
१७ अर्के सुरशिल्पिनि च विश्वकर्मा । १८ षट् यत्नाः १९ पञ्च घनाघन
शब्दवाच्याः ।

[1]घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरम् ॥ ११० ॥
[2]अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ॥
[3]इनः सूर्ये प्रभौ [4]राजा मृगाङ्के क्षत्रिये नृपे ॥१११॥
[5]वाणिन्यौ नर्तकीदूत्यौ स्रवन्त्यामपि [6]वाहिनी ॥
[7]ह्लादिन्यौ वज्रतडितौ वन्दायामपि [8]कामिनी ॥११२॥
त्वग्देहयोरपि [9]तनुः [10]सूनाऽधोजिह्विकापि च ॥
क्रतुविस्तारयोरस्त्री [11]वितानं त्रिषु तुच्छके ॥ ११३ ॥
मन्देऽथ [12]केतनं कृत्ये केतावुपनिमन्त्रणे ॥
वेदस्तत्त्वं तपो [13]ब्रह्म ब्रह्मा विप्रः प्रजापतिः ॥११४॥
उत्साहने च हिंसायां सूचने चापि [14]गन्धनम् ॥
[15]आतञ्चनं प्रतीवापजवनाप्यायनार्थकम् ॥ ११५ ॥
[16]व्यञ्जनं लाञ्छनं श्मश्रु निष्ठानावयवेष्वपि ॥

[1]स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ११६
[2]स्यादुद्यानं निःसरणे वनभेदे प्रयोजने ॥
अवकाशे स्थितौ [3]स्थानं क्रीडादावपि [4]देवनम् ११७
[5]उत्थानं पौरुषे तन्त्रे सन्निविष्टोद्गमेऽपि च ॥
[6]व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च ॥११८॥
मारणे मृतसंस्कारे गतौ द्रव्येऽर्थदापने ॥
निर्वर्तनोपकरणानुव्रज्यासु च [7]साधनम् ॥ ११९ ॥
[8]निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ॥
[9]व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ॥ १२० ॥
[10]पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि ॥
तिथिभेदे क्षणे [11]पर्व [12]वर्त्म नेत्रच्छदेऽध्वनिः १२१॥
आकार्यगुह्ये [13]कौपीनं मैथुनं संगतौ रते ॥
[15]प्रधानं परमात्मा धीः [16]प्रज्ञानं बुद्धिचिन्हयोः ॥१२२॥

---

१ द्वयोः कौलीनशब्दः । २ त्रिषु उद्यानशब्दः । ३ द्वयोः स्थानशब्दः । ४ क्रीडादौ देवनशब्दः । ५ पञ्चसु उत्थानम् । ६ द्वयोर्व्युत्थानशब्दः । ७ मारणादिषु सैन्ये मेढ्रे च साधनशब्दः । ८ त्रिषु निर्यातनशब्दः । ९ षट्सु व्यसनशब्दः । १० त्रिषु पक्ष्मशब्दः । ११ द्वयोः पर्व । १२ द्वयोर्वर्त्म । १३ द्वयोः कौपीनम् । १४ द्वयोर्मैथुनम् । १५ द्वयोः प्रधानम् । १६ द्वयोः प्रज्ञानशब्दः ।

[1]प्रसूनं [2]पुष्टकलयोर्निधनं कुलनाशयोः ॥
[3]क्रन्दने रोदनाह्वाने वर्ष्म [4]देहप्रमाणयोः ॥ १२३ ॥
गृहदेहत्विट्प्रभावा [5]धामान्यथ चतुष्पथे ॥
संनिवेशे च [6] संस्थानं [7]लक्ष्म चिह्नप्रधानयोः॥१२४॥
[8]आच्छादने संपिधानमपवारणमित्युभे ॥
[9]आराधनं साधने स्यादवाप्तौ तापणेऽपि च ॥ १२५॥
[10]अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ॥
[11]रत्नं स्वजातिश्रेष्ठेऽपि [12]वनं सलिलकानने ॥१२६
[13]तलिनं विरले स्तोके वाच्यलिङ्गं तथोत्तरे ॥
[14]समानाः सत्समैकेस्युः [15]पिशुनौ खलसूचकौ १२७
[16]हीनन्यूनावूनगर्ह्यौ वेगिशूरौ [17] तरस्विनौ ॥
[18]अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गतावपि ॥ १२८ ॥

---

१ द्वयोः प्रसूनशब्दः । २ द्वयोर्निधनशब्दः । ३ द्वयोः क्रन्दनशब्दः । ४ द्वयोर्वर्ष्मशब्दः । ५ चत्वारि धामशब्दवाच्यानि । ६ द्वयोः संस्थानशब्दः । ७ द्वयोर्लक्ष्म । ८ द्वयोराच्छादनशब्दः । ९ त्रिषु आराधनशब्दः । १० त्रिषु अधिष्ठानशब्दः । ११ स्वजातिश्रेष्ठे प्रस्तरभेदे च रत्नम् । १२ उभे वनशब्दवाच्ये १३ उभे तलिनशब्दवाच्ये। १४ त्रयः समानशब्दवाच्या। १५ द्वौ पिशुनशब्दवाच्यौ १६ द्वौ हीनन्यूनशब्दवाच्यौ । १७ द्वौ तरस्विशब्दवाच्यौ । १८ त्रयोऽभिपन्नशब्दवाच्याः ।

[1]कल्पो भूषणे वर्हे तूणीरे संहतावपि ।
परिच्छेदे [2]परीवापः पर्युप्तौ सलिलस्थितौ ॥११९॥
गोधुग्गोष्ठपती [3]गोपौ हरविष्णू [4]वृषाकपी ।
[5]बाष्पमूष्माश्रु [6]कशिपु त्वन्नमाच्छादनं द्वयम् ॥१२०॥
[7]तल्पं शय्याट्टदारेषु स्तम्बेऽपि [8]विटपोऽस्त्रियाम् ।
[9]प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः ॥ १२१ ॥
मेढ्रलिङ्गः शमी, कूर्मी वीणाभेदश्च [10]कच्छपी
( [11]कुतपो मृगरोमोत्थपटे चान्होऽष्टमेंऽशके )

॥ इति पान्ताः ॥

स्वर्णे पुंसि रेफः [12]स्यात्कुत्सिते वाच्यलिङ्गकः॥१२२॥

॥ इति फान्ताः ॥

अन्ताभवसत्वेऽश्वे [13]गन्धर्वो दिव्यगायने ।
[14]कम्बुना वलये शंखे [15]द्विजिह्वौ सर्पसूचकौ॥१२३॥

---

१ पञ्चसु कल्पशब्दः । २ त्रिषु परीवापः । ३ द्वौ गोपौ । ४ द्वौ वृषाकपी, ५ द्वे बाष्पशब्दे । ६ द्वयं कशिपुपदम् । ७ त्रिषु तल्पशब्दः । ८ द्वयोर्विटपशब्दः । ९ अन्तौ भवौ बुधमनोज्ञयोर्वर्तन्ते । १० द्वे कच्छपीवीणावाच्ये । ११ द्वयोः कुतपः । १२ एकस्मिन्नेकशब्दः पुमान् कुत्सिते वाच्यलिङ्गः । १३ त्रिषु गन्धर्वशब्दः । १४ द्वयोः कम्बुशब्दः । १५ द्वौ द्विजिह्वौ ।

पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेपि पूर्वजान् ॥

॥ इति वान्ताः ॥

[1]कुम्भौ घटेभमूर्धांशौ [2]डिम्भौ तु शिशुबालिशौ ।
[3]स्तम्भौ स्थूणाजडीभावौ [4]शम्भू ब्रह्मत्रिलोचनौ ।
कुक्षिभ्रूणार्भका [5]गर्भा [6]विस्रम्भः प्रणयेऽपि च ॥१३५॥
स्याद्भेर्यां [7]दुंदुभिः पुंसि स्यादक्षे दुंदुभिः स्त्रियाम् ।
स्यान्महारजने क्लीबं [8]कुसुम्भं करके पुमान् ॥१३६॥
क्षत्रियेऽपि च [9]नाभिर्ना [10]सुरभिर्गवि च स्त्रियाम् ।
[11]सभा संसदि सभ्येचत्रिष्वध्यक्षेऽपि [12]वल्लभः ॥१३७॥

॥ इति भान्ताः ॥

किरणप्रग्रहौ [13]रश्मी कपिभेकौ [14]प्लवङ्गमौ ।
इच्छामनोभवौ [15]कामौ शौर्योद्योगौ [16]पराक्रमौ ॥१३८॥

---

१ द्वौ कुम्भशब्दवाच्यौ । २ द्वौ डिम्भशब्दवाच्यौ । ३ द्वौ स्तम्भौ । ४ द्वौ शम्भू । ५ त्रयो गर्भाः । ६ द्वयोर्विस्रम्भः । ७ भेर्यां दुन्दुभिः पुमान् । अक्षे स्त्री । ८ पुष्पभेदे कुसुम्भशब्दः क्लीबः । करके कमण्डलौ पुमान् । ९ चतुर्षु नाभिशब्दः । १० सप्तसु सुरभिः । ११ द्वयोः सभा । १२ द्वयोर्वल्लभः । १३ द्वयो रश्मिः । १४ द्वयोः प्लवङ्गमः । १५ द्वयोः कामः । १६ द्वयोः पराक्रमः ।

[1]धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः ।
उपायपूर्व आरम्भ [2]उपधा चाप्युपक्रमः ॥ १३९ ॥
वणिक्पथः पुरं वेदो [3]निगमो नागरो वणिक् ।
[4]नैगमौ द्वौ बले [5]रामा नीलचारुसिते त्रिषु ॥१४०॥
शब्दादिपूर्वो वृन्देऽपि [6]ग्रामः क्रान्तौ च [7]विक्रमः ।
[8]स्तोमः स्तोत्रेऽध्वरे वृन्दे [9]जिह्मस्तु कुटिलेऽलसे॥१४१॥
उष्णोऽपि [10]घर्मश्चेष्टालङ्कारे भ्रान्तौ च [11]विभ्रमः ।
[12]गुल्मा रुक्स्तम्बसेनाश्च [13]जामिः स्वसृकुलस्त्रियोः १४२
क्षितिक्षान्त्योः [14]क्षमा युक्ते क्षमं शक्ते हिते त्रिषु ।
त्रिषु [15]श्यामौ हरित्कृष्णौ [16]श्यामा स्याच्छारिवानिशा
[17]ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ।
[18]सूक्ष्ममध्यात्ममप्याद्ये प्रधाने [19]प्रथमस्त्रिषु ॥१४३॥

---

१ पुण्यादिषट्के धर्मशब्दः । २ द्वयोरुपधा । ३ त्रयो निगमाः । ४ द्वौ नैगमौ । ५ चतुर्षु रामशब्दः । ६ द्वयोर्ग्रामशब्दः । ७ त्रिषु विक्रमः । ८ त्रिषु स्तोमः । ९ द्वयोर्जिह्मः । १० एकस्मिन्घर्मः । ११ त्रिषु विभ्रमः । १२ त्रिषु गुल्मशब्दः । द्वयोर्जामिशब्दः । १३ द्वयोः क्षमा । १४ द्वौ श्यामौ । १५ त्रिषु श्यामा । १६ षट्सु ललामशब्दः । १७ द्वयोः सूक्ष्मम् । १८ त्रयोः प्रथम ।

[1]वामौ वल्गुप्रतीपौ [2]द्वावधमौ न्यूनकुत्सितौ।
जीर्णं च परिभुक्तं [3]चयातयाममिदं द्वयम् ॥ १४५ ॥

॥ इति मान्ताः ॥

तुरङ्गगरुडौ [4]तार्क्ष्यौ निलयापचयौ [5]क्षयौ।
[6]श्वशुर्यौ देवरश्यालौ भ्रातृव्यौ [7]भ्रातृजद्विषौ ॥१४६॥
[8]पर्जन्यौ रसदब्देन्द्रौ [9]स्यादर्यः स्वामिवैश्ययोः।
[10]तिष्यपुष्ये कलियुगे [11]पर्यायोऽवसरे क्रमे ॥१४७॥
[12]प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु।
रन्ध्रे [13]शब्देऽप्यानुशयो दीर्घद्वेषानुतापयोः ॥ १४८ ॥
[14]स्थूलोच्चयस्त्वसाकल्ये नागानां मध्यमे गते।
[15]समयाः शपथाचारकालसिद्धान्तसंविदः ॥ १४९ ॥
व्यसनान्यशुभं दैवं [16]विपदित्यनयास्त्रयः।
[17]अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथापदि ॥१५०॥

१ द्वौ वामौ। २ द्वावधमौ। ३ द्वयं यातयाम संज्ञकम्। ४ द्वौ तार्क्ष्यसंज्ञौ। ५ उभौ क्षयौ। ६ द्वयौ श्वशुर्यः। ७ द्वौ भ्रातृव्यौ। ८ उभौ पर्जन्यौ। ९ द्वयोरर्यः। १० द्वयोस्तिष्य। ११ त्रिषु पर्यायः। १२ सप्तसु प्रत्ययशब्दः। १३ द्वयोरनुशयः। १४ द्वयोः स्थूलोच्चयः। १५ पञ्चसु समयः। १६ त्रयमनयसंज्ञम्। १७ पञ्चसु अत्ययः।

युद्धायत्योः [1]संपरायः [2]पूज्यस्तु श्वशुरेऽपि च ।
पश्चादवस्थायिबलं समवायश्च [3]संनयौ ॥ १४१ ॥
संघाते संनिवेशे च [4]संस्त्यायः [5]प्रणयास्त्वमी ।
विस्रम्भयाञ्चाप्रेमाणो विरोधेऽपि [6]समुच्छ्रयः ॥१४२॥
[7]विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ।
निर्यासेऽपि [8]कषायोऽस्त्री सभायां च [9]प्रतिश्रयः ॥१४३॥
[10]प्रायो भून्म्यन्तगमने [11]मन्युर्दैन्ये क्रतौ क्रुधि ।
[12]रहस्योपस्थयोर्गुह्यं [13]सत्यं शपथतथ्ययोः ॥१४४॥
[14]वीर्यं बले प्रभावे च [15]द्रव्यं भव्ये गुणाश्रये ।
[16]धिष्ण्यं स्थाने गृहेऽभेऽग्नौ [17]भाग्यं कर्म शुभाशुभम् ।
[18]कशेरुहेम्नोर्गाङ्गेयं [19]विशल्या दन्तिकाऽपि च ।
[20]वृषाकपायी श्रीगौर्योरभिख्या [21]नामशोभयोः ॥१४५॥

---

१ त्रिषु संपरायः । २ द्वयोः पूज्यः । ३ त्रयों संनयौ । ४ त्रिषु संस्त्यायः । ५ त्रय; प्रणयाः । ६ द्वयोः समुच्चयः । ७ पञ्चसु विषयशब्दः । ८ काषाये विलेपनादौ च कषायः । ९ द्वयोः प्रतिश्रयः । १० द्वयोः प्रायः । ११ त्रिषु मन्युः । १२ द्वय गुह्यम् १३ एतच्च सत्यम । १४ द्वयोर्वीर्यम । १५ षट्सु द्रव्यम् । १६ पञ्चसु धिष्ण्यम । १७ एकं भाग्यम् । १८ द्वयोर्गाङ्गेयम । १९ द्वयो विशल्या । २० द्वे वृषाकपायीसंज्ञक । २१ एका अभिख्या ।

आरम्भो निष्कृतिः शिक्षा जनं पूसम्प्रधारणम् ।
उपायः कर्म चेष्टा च चिकित्सा च नव [1]क्रियाः ॥१५७॥
[2]छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ।
[3]कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ॥१५८॥
[4]कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ।
[5]जन्यं स्याज्जनवादेऽपि [6]जघन्योऽन्त्येऽधमेऽपि च ॥१५९॥
गर्ह्याहीनौ च [7]वक्तव्यौ [8]कल्यौ सज्जनिरामयौ ।
[9]आत्मवाननपेतोऽर्थादर्थ्यौ [10]पुण्यं तु चार्वपि ॥१६०॥
[11]रूप्यं प्रशस्तरूपेऽपि [12]वदान्यो वल्गुवागपि ।
न्याय्येऽपि [13]मध्यं [14]सौम्यन्तु सुन्दरे सोमदैवते ॥१६१॥

॥ इति यान्ताः ॥

निवहावसरौ [15]वारौ [16]संस्तरौ प्रस्तराध्वरौ ॥
[17]गुरू गीष्पतिपित्राद्यौ [18]द्वापरौ युगसंशयौ ॥१६२॥

---

१ नव क्रियाशब्दवाच्याः । २ चतुर्षु छायाशब्दः । ३ चतुर्षु कक्ष्या शब्दः । ४ त्रिषु कृत्या । ५ जनकादौ युद्धादौ च जन्यम् । ६ द्वयोर्जघन्यं । ७ चतुर्षु वक्तव्यशब्दः । ८ द्वौ कल्यौ । ९ द्वयोरर्थ्यौ । १० त्रिषु पुण्यम् । रूप्यम् । १२ द्वयोर्वदान्यः । १३ द्वयोर्मध्यमम् । १४ द्वयोः सौम्यम् । द्वौ संस्तरौ १७ द्वौ गुरु । १८ द्वयोर्द्वापरः ।

[१]प्रकारो भेदसादृश्ये [२]आकाराविङ्गिताकृती ॥
[३]किशारू सस्यशूकेषु मरू [४]धन्वधराधरौ ॥ १६३ ॥
[५]अद्रयो द्रुमशैलार्काः स्त्रीस्तनाब्दौ [६]पयोधरौ ॥
[७]ध्वान्तारिदानवा वृत्रा बलिहस्तांशवः [८]कराः ॥१६४॥
[९]प्रदरा भङ्गनारीरुग्बाणा [१०]अस्राः कचा अपि ॥
अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च [११]तुवरौ॥१६५॥
स्वर्णेऽपि [१२]राः [१३]परिकरः पर्यङ्कपरिवारयोः ॥
मुक्ताशुद्धौ च [१४]तारः [१५]स्यान्द्धारो वायौ स तु त्रिषु ।
कर्बुरेऽथ प्रतिज्ञाजिसंविदापत्सु [१६]संगरः ॥
वेदभेदे गुप्तवादे [१७]मन्त्रो [१८]मित्रो रवावपि ॥ १६७ ॥
मखेषु यूपखण्डेऽपि [१९]स्वरुर्गुह्येऽप्यवस्करः[२०] ॥
[२१]आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते ॥ १६८ ॥

---

१ एकस्मिन् प्रकारः । २ द्वयोराकारः । ३ द्वयोः किशारुः । ४ द्वे मरुः । ५ त्रयोऽद्रयः । ६ द्वौ पयोधरौ । ७ त्रयो वृत्राः । ८ त्रयः कराः । ९ चत्वारः प्रदराः । १० द्वावस्रौ । ११ द्वौ तुवरौ । १२ द्वयोः राः । १३ द्वयोः परिकरः । १४ एकस्मिन् तारः । १५ एकस्मिन् धारः । १६ त्रिषु संगरः । १७ द्वयोर्मन्त्रः । १८ द्वयोर्मित्रः । १९ द्वयोः स्वरुः । २० द्वयोरवस्करः । २१ द्वयोराडम्बरः ।

[१]अभिहारोऽभियोगे च चौर्ये सन्नहनेऽपि च ॥
स्याज्जङ्गमे [२]परीवारः खड्गकोषे परिच्छदे ॥ १६९ ॥
[३]विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ॥
द्वारि द्वाःस्थे [४]प्रतीहारः प्रतिहार्यप्यनन्तरे ॥ १७० ॥
विपुले नकुले विष्णौ [५]बभ्रुर्ना पिङ्गले त्रिषु ॥
[६]सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ॥१७१॥
[७]दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् ॥
महारण्ये दुर्गपथे [८]कान्तारं पुंनपुंसकम् ॥ १७२ ॥
[९]मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥
देवाद्वृते [१०]वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ॥१७३॥
वंशाङ्कुरे [११]करीरोऽस्त्री तरुभेदे घटे च ना ॥
ना चमूजघने हस्तसूत्रे [१२]प्रतिसरोऽस्त्रियाम् ॥
यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ॥

---

१ त्रिष्वभिहारः । २ त्रिषु परीवारः । ३ त्रयो विष्टरपर्यायाः । ४ द्वयोः प्रतीहारः । ५ द्वयोर्बभ्रुः पुमान् पिङ्गले त्रिषु । ६ चतुर्षु सारः । ७ एतस्मिन् दुरोदरः । ८ द्वयोः कान्तारः । ९ एकम् मत्सरः । १० एकम् वरः । ११ एकम् करीरः । १२ [illegible]

शुकाहिकपिभेकेषु [1]हरिर्ना कपिले त्रिषु ॥ १७५ ॥
[2]शर्करा कर्परांशेऽपि [3]यात्रा स्याद्यापने गतौ ॥
[4]इरा भूवाक्सुराप्सु [5]स्यात्तन्द्री निद्राप्रमीलयोः ॥१७६॥
[6]धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि ॥
[7]क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ॥१७७॥
त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रं[8] [9]मात्रा परिच्छदे ॥
अल्पं च परिमाणे सा मात्रं [10]कार्त्स्न्येऽवधारणे ॥१७८॥
[11]आलेख्याश्चर्ययोश्चित्रं [12]कलत्रं श्रोणिभार्ययोः ॥
योग्यभाजनयोः [13]पात्रं [14]पत्रं वाहनपक्षयोः ॥१७९॥
निदेशग्रन्थयोः [15]शास्त्रं [16]शस्त्रमायुधलोहयोः ॥
[17]स्याज्जटाशुकयोर्नेत्रं [18]क्षेत्रं पत्नीशरीरयोः ॥१८०॥
मुखाग्रे क्रोडहलयोः [19]पोत्रं [20]गोत्रं तु नाम्नि च ॥

---

१ षट्सु हरिशब्दः । २ त्रिषु शर्कराशब्दः । ३ द्वयोर्यात्रा । ४ चतुर्षु इराशब्दः । ५ द्वयोस्तन्द्रीशब्दः । ६ चतुर्षु धात्रीशब्दः । ७ षट्सु क्षुद्रा । ८ क्रूरादिषु क्षुद्रम् । ९ त्रिषु मात्रा । १० द्वयोर्मात्रम् । ११ द्वयोश्चित्रम् । १२ द्वयोः कलत्रम् । १३ द्वयोः पात्रम् । १४ द्वयोः पत्रम् । १५ द्वयोः शास्त्रम् । १६ द्वयोः शस्त्रम् । १७ द्वयोर्नेत्रम् । १८ द्वयोः क्षेत्रम् । १९ द्वयोः पोत्रम् । २० त्रिषु गोत्रम् ।

[1]सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ॥ १८१ ॥
[2]अजिरं विषये कायेऽप्यम्बरं[3] व्योम्नि वाससि ॥
[4]चक्रं राष्ट्रेऽप्यक्षरं [5]तु मोक्षेऽपि [6]क्षीरमप्सु च॥१८२॥
स्वर्णेऽपि [7]भूरिचन्द्रौ द्वौ द्वारमात्रेऽपि [8]गोपुरम् ॥
गुहादम्भौ [9]गह्वरे द्वे रहोऽन्तिकमुपह्वरे[10] ॥ १८३ ॥
पुरोऽधिकमुपर्यग्राण्यगारे नगरे [11]पुरम् ॥
[12]मन्दिरं चाथ [13]राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ॥१८४॥
[14]दरोऽस्त्रियां भये श्वभ्रे [15]वज्रोऽस्त्री हीरके पवौ ॥
[16]तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे ॥१८५॥
[17]औशीरश्चामरे [18]दण्डेऽप्यौशीरं शयनासने ॥
[19]पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ॥१८६॥
व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ॥

---

१ पञ्चसु सत्रशब्दः । २ त्रिषु अजिरम् । ३ द्वयोरम्बरम् । ४ त्रिषु चक्रम् । ५ त्रिष्वक्षरम् । ६ द्वयोः क्षीरम् । ७ द्वावप्यर्थौ [illegible] । ८ द्वारमात्रे गोपुरम् । ९ द्वयोर्गह्वरम् । १० द्वे उपह्वरे । ११ [illegible] पुरशब्दस्य वाच्यानि । १२ द्वयोः पुरम् । १३ द्वयोः राष्ट्रः । १४ द्वयोर्दरः । १५ द्वयोर्वज्रः । १६ षट्सु तन्त्रशब्दः । १७ द्वयोरौशीरः । १८ द्वयोरौशीरम् । १९ अष्टसु पुष्करम् ।

[1]अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ॥१८७॥
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥
मुस्तेऽपि [2]पिठरं राजकशेरुण्यपि [3]नागरम् ॥१८८॥
[4]शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकम् ॥
[5]गौरोऽरुणे सिते पीते [6]व्रणकार्यप्यरुष्करः ॥ १८९ ॥
[7]जठरः कठिनेऽपि स्यादधस्तादपि [8]चाधरः ॥
अनाकुलेऽपि [9]चैकाग्रो [10]व्यग्रो व्यासक्त आकुले ॥१९०॥
[11]उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः [12]स्यादनुत्तरः ॥
एषां विपर्यये श्रेष्ठे दूरानात्मोत्तमाः [13]पराः ॥ १९१ ॥
स्वादुप्रियौ तु [14]मधुरौ [15]क्रूरौ कठिननिर्दयौ ॥
[16]उदारो [17]दातृमहतोरितरस्त्वन्यनीचयोः ॥ १९२ ॥
मन्दस्वच्छन्दयोः [18]स्वैरः [19]शुभ्रमुद्दीप्तशुक्लयोः ॥

॥ इति रान्ताः ।

---

१ सप्तस्वपु अन्तरशब्दः । २ एकत्र पिठरशब्दः । ३ द्वयोर्नागरम् । ४ द्वयोः शार्वरशब्दः । ५ त्रिषु गौरः । ६ द्वयोररुष्करः । ७ द्वयोर्जठरः । ८ द्वयोरधरः । ९ द्वयोरेकाग्रः । १० द्वयोर्व्यग्रः । ११ त्रिषु उत्तरः । १२ द्वयोरनुत्तरः । १३ त्रयः पराः । १४ द्वयोर्मधुरः । १५ द्वयोः क्रूरः । १६ द्वयोरुदारः । १७ द्वयोरितरः । १८ द्वयोः स्वैरः । १९ द्वयोः शुभ्रम् ।

चूडा किरीटं केशाश्च संयता [1]मौलयस्त्रयः ॥ ११२ ॥
द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि [2]पीलवः ॥
कृतान्तानेहसोः [3]कालश्चतुर्थेऽपि युगे [4]कलिः ॥११३॥
स्यात्कुरङ्गेऽपि [5]कमलः प्रावारेऽपि च [6]कम्बलः ॥
करोपहारयोः पुंसि [7]बलिः प्राण्यङ्गजे स्त्रियाम् ॥११५॥
स्थौल्यसामर्थ्यसैन्येषु [8]बलं ना काकसीरिणोः ॥
[9]वातूलः पुंसि वात्यायामपि वातासहे त्रिषु ॥ ११६॥
भेद्यलिङ्गः शठे [10]व्यालः पुंसि श्वापदसर्पयोः ॥
[11]मलोऽस्त्री पापविट्किट्टान्यस्त्री [12]शूलं रुगायुधम् ११७॥
शङ्कावपि द्वयोः [13]कीलः [14]पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु॥
[15]कला शिल्पे कालभेदे[16]ऽप्याली सख्यावली अपि११८
अब्ध्यम्बुविकृतौ [17]वेला कालमर्यादयोरपि ॥

---

१ त्रयो मौलयः । २ चतुर्षु पीलवः । ३ द्वयोः कालः । ४ द्वयोः कलिः । ५ द्वयोः कमलः । ६ द्वयोः कम्बलः । ७ द्वयोर्बलिः पुमान् । स्त्रग्रहोपे स्त्री । ८ त्रिषु बलम् । द्वयोर्ना । ९ एकत्र वातूलः पुमान् अन्यत्र तु त्रिषु । १० पाठे व्यालो वाच्यलिङ्गो द्वयोर्नृ तथा । ११ त्रिषु मलम् । १२ द्वयोः शूलम् । १३ द्वयोः कीलः । १४ चतुर्षु पालिः । १५ द्वयोः कला । १६ द्वयोरावलिः । १७ त्रिषु वेला ।

[1]बहुलाः कृत्तिका गावो बहुलेऽग्नौ शितौ त्रिषु १९९
[2]लीला [3]विलासक्रिययोरुपला शर्करापि च ॥
शोणितेऽम्भसि [4]कीलालं [5]मूलमाद्ये शिफाभयोः २००
[6]जालं समूह आनाय गवाक्षक्षारकेष्वपि ॥
[7]शीले स्वभावे सद्वृत्ते सस्ये हेतुकृते [8]फलम् ॥२०१॥
छर्दिर्नेत्ररुजोः क्लीबं समूहे [9]पटलं न ना ॥
अधःस्वरूपयोरस्त्री [10]तलं स्याच्चामिषे [11]पलम् ॥२०२॥
और्वानलेऽपि [12]पातालं [13]चैलं वस्त्रेऽधमे त्रिषु ॥
[14]कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले २०३
निर्णीते [15]केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ॥
पर्याप्तिक्षेमपुण्येषु [16]कुशलं शिक्षिते त्रिषु ॥ २०४ ॥
[17]प्रवालमङ्कुरेऽप्यस्त्री त्रिषु [18]स्थूलं जडेऽपि च ॥

---

द्वयोर्बहुला । २ द्वयोर्लीला । ३ द्वयोरुपला । ४ द्वयोः कीलालशब्दः । ५ त्रिषु मूलम् । ६ चतुर्षु जालशब्दः । ७ द्वयोः शीलम् । ८ एकत्र फलम् । ९ छर्दिषि नेत्ररुजि च पटलं क्लीबम् । समूहे तु पुनपुंसकः । १० द्वयोस्तलम् । ११ एकत्र पलम् । १२ द्वयोः पातालम् । १३ एकत्र चैलं क्लीबम् अधमे त्रिषु । १४ द्वयोः कुकूलशब्दः क्लीबः । तुषानले पुमान् । १५ एकत्र केवलम्, द्वयोः तु त्रिषु । १६ द्वयोः कुशलम् । शिक्षिते त्रिषु । १७ द्वयोः प्रवालम् । १८ द्वयोः स्थूलशब्दस्त्रिषु ।

[1]करालो दन्तुरे तुङ्गे [2]चारौ दक्षे च [2]पेशलः ॥२०५॥
मूर्खेऽर्भकेऽपि [3]बालः [4]स्याल्लोलश्चलसतृष्णयोः ॥

॥ इति लान्ताः ॥

[5]दवदावौ वनारण्यवन्ही जन्महरौ [6]भवौ ॥ २०६ ॥
मन्त्री सहायः [7]सचिवौ पतिशाखिनरा [8]धवाः ॥
[9]अवयः शैलमेषार्का आज्ञाह्वानाध्वरा [10]हवाः ॥२०७
[11]भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥
स्यादुत्पादे फले पुष्पे [12]प्रसवो गर्भमोचने ॥ २०८ ॥
अविश्वासेऽपन्हवेपि निकृतावपि [13]निन्हवः ॥
उत्सेकामर्षयोरिच्छाप्रसवे मह [14]उत्सवः ॥ २०९ ॥
[15]अनुभावः प्रभावेच सतां च मतिनिश्चये ॥
स्याज्जन्महेतुः [16]प्रभवः स्थानं चाद्योपलब्धये ॥२१०॥
शूद्राया विप्रतनये शस्त्रे [17]पारशवो मतः ॥

---

१ द्वयोः करालः। २ द्वयोः पेशलम्। ३ द्वयोःबालः। ४ द्वयोर्लोलः। ५ द्वयोर्दवदावौ। ६ द्वयोर्भवः। ७ द्वयोः सचिवः। ८ त्रयोधवाः। ९ त्रिषु अवयवः। १० त्रिषु हवः। ११ षट्सु भावः। १२ चतुर्षु प्रसवः। १३ त्रिषु निन्हवः। १४ पञ्चसुउत्सवः। १५ त्रिष्वनुभावः। १६ द्वयोः प्रभवः। १७ द्वयोः पारशवः।

[१]ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु २११
[२]स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ॥
स्त्रीकटीवस्त्रबन्धेऽपि [३]नीवी परिपणेऽपि च ॥ २१२ ॥
[४]शिवा गौरीफेरवयोर्द्वन्द्वं [५]कलहयुग्मयोः ॥
द्रव्यासुव्यवसायेषु [६]सत्त्वमस्त्री तु जन्तुषु ॥ २१३ ॥
[७]क्लीबं नपुंसके षण्ढे वाच्यालिङ्गमपि क्रमे ॥

॥ इति वान्ताः ॥

द्वौ [८]विशौ वैश्यमनुजौ द्वौ चाराभिमरौ स्पशौ [९] २१४
द्वौ [१०]राशी पुञ्जमेषाद्यौ [११]द्वौ वंशौ कुलमस्करौ ॥
रहःप्रकाशौ [१२]वीकाशौ [१३]निर्वेशो भृतिभोगयोः २१५
कृतान्ते पुंसि [१४]कीनाशः क्षुद्रकर्षकयोस्त्रिषु ॥
पदे लक्ष्ये निमित्तेऽपदेशः [१५]स्यात्कुशमप्सु [१६]च ॥२१६॥
[१७]दशाऽवस्थानेकविधाप्याशा [१८]तृष्णापि चायता ॥

---

१ ध्रुवशब्दो नक्षत्रभेदे पुमान् । निश्चिते क्लीबः । नित्ये त्रिषु । २ द्वयोः स्वः पुमान् । आत्मीये त्रिलिङ्गः । धने पुन्नपुंसके । ३ द्वयोर्नीवी । ४ द्वयोः शिवा । ५ द्वयोर्द्वन्द्वम् । ६ त्रिषु सत्त्वम् । ७ त्रिषु क्लीबशब्दः । ८ द्वयोर्विशब्दः । ९ द्वयोः स्पशः १० द्वयो राशिः । ११ द्वयोर्वंशः । १२ द्वयोर्वीकाशः । १३ द्वयोर्निर्वेशः । १४ त्रिषु कीनाशः । १५ त्रिष्वपदेशः । १६ अप्सु कुशम् । १७ एकत्र दशा । १८ द्वयोराशा ।

[1]वशा स्त्री करिणी च स्याद् [2]दृग्ज्ञाने ज्ञातरि त्रिषु २१७
[3]स्यात्कर्कशः साहसिकः कठोरामसृणावपि ।।
[4]प्रकाशोऽतिप्रसिद्धेऽपि शिशावज्ञे च [5]बालिशः २१८
[6][ कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघ दिव्ययोः ]

।। इति शान्ताः ।।

[7]झषमत्स्यावनिमिषौ [8]पुरुषावात्ममानवौ ।।
काकमत्स्यात्खगौ [9]ध्वाङ्क्षौ [10]कक्षौ तु कर्णांवीरुधौ ।।
[11]अभीषुः प्रग्रहे रश्मौ [12]प्रैषः प्रेषणमर्दने ।।
[13]पक्षः सहायेऽप्युष्णीषः [14]शिरोवेष्टकिरीटयोः ।।२२०।।
शुक्ले मूषके श्रेष्ठे सुकृते वृषभे [15]वृषः ।।
द्यूतेऽक्षे [16]शारिफलकेऽप्याकर्षोऽथा [17]क्षमिन्द्रिये २२१
ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे ।।
[18]कर्षूर्वार्ताकरीषाग्निः [19]कर्षूः कुल्याभिधायिनी २२२

---

१ द्वयोर्वशा । २ द्वयोर्दृक् । ३ त्रिषु कर्कशः । ४ द्वयोः प्रकाश । ५ द्वयोर्बालिश । ६ चतुर्षु कोशः । ७ झषावनिमिषौ । ८ द्वयोः पुरुषः । ९ द्वयोर्ध्वाङ्क्षः । १० द्वौ कक्षौ । ११ द्वयोरभीषु । १२ द्वयोः प्रैषः । १३ द्वयोः पक्षः । १४ द्वयोरुष्णीषः । १५ चतुर्षु वृषः । १६ त्रिष्वाकर्षः । १७ सप्तस्वक्षः । १८ द्वयोः कर्षूः । १९ कुल्याभिधायिनी कर्षूः स्त्री ।

पुंभावे तत्क्रियायां च [1]पौरुषं [2]विषमप्सु च ॥
[3]उपादानेऽप्यामिषं स्यादपराधेऽपि [4]किल्बिषम् ॥२२३॥
स्याद्वृष्टौ लोकधात्वंशे वत्सरे [5]वर्षमस्त्रियाम् ॥
[6]प्रेक्षा नृत्येक्षणं प्रज्ञा [7]भिक्षा सेवार्थना भृतिः ॥२२४॥
[8]त्विट् शोभापि त्रिषु परे [9]न्यक्षं कार्त्स्न्यनिकृष्टयोः ॥
प्रत्यक्षेऽधिकृतेऽध्यक्षो[10] [11]रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥२२५॥

॥ इति षान्ताः ॥

रविश्वेतच्छदौ [12]हंसौ सूर्यवह्नी [13]विभावसू ॥
[14]वत्सौ तर्णकवर्षौ द्वौ सारङ्गाश्च [15]दिवौकसः ॥२२६॥
शृङ्गारश्च विषे वीर्ये गुणे रागे द्रवे रसः [16] ॥
[17]पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ॥२२७॥
देवभेदेऽनले रश्मौ [18]वसू रत्ने धने [19]वसु ॥

---

१ एकत्र पौरुषम्। २ द्वयोर्विषम्। ३ द्वयोरामिषम्। ४ द्वयोः किल्बिषम्। ५ पु वर्षशब्दः। ७ द्वयोर्भिक्षा। ८ चतुर्षु त्विट्। ९ द्वयोर्न्यक्षम्। १० एकं प्रत्यक्षिकृत। ११ एकं अप्रेमणि अचिक्कणे च। १२ द्वयोर्हंस०। १३ द्वयोर्विभावसोः। १४ द्वयोर्वत्सः। १५ एते दिवौकसः। १६ शृङ्गारादिषु विषवीर्यगुणरागेषु रसशब्दः। १७ उत्तंसावतंसौ कर्णपूरे शिरोभूषणे च। १८ त्रिषु वसुः। १९ रत्ने धने वसु।

विष्णौ च [1]वेधाः स्त्री [2]त्वाशीर्हिताशंसाहि दंष्ट्रयोः २२८
[3]लालसे प्रार्थनौत्सुक्ये [4]हिंसा चौर्यादिकर्म च ॥
[5]प्रसूश्चापि भुवावौ [6]रोदस्यौ रोदसी च ते ॥२२९॥
ज्वालाभासौ न [7]पुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु [8] ॥
[9]पापापराधयोरागः [10]खगबालदिनोर्वयः ॥२३०॥
तेजः [11]पुरीषयोर्वर्चो [12]महस्तूत्सवतेजसोः ॥
[13]रजो गुणे च स्त्रीपुष्पे राहौ ध्वान्ते गुणे [14]तमः २३१
[15]छन्दः पद्येऽभिलाषे च [16]तपः कृच्छ्रादिकर्म च ॥
[17]सहो बलं सहा मार्गो [18]नभः खं श्रावणो नभाः २३२
[19]ओकः [20]सद्माश्रयश्चौकाः [21]पयः क्षीरं पयोऽम्बु च ॥
[22]ओजो दीप्तौ बले [23]स्रोत इन्द्रिये निम्नगारये २३३
[24]तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु ॥

---

१ द्वयोर्वेधाः । २ द्वयोराशीः । ३ उभे लालसे । ४ द्वयोर्हिंसा । ५ द्वयोः प्रसूः । ६ द्वे रोदसी । ७ द्वयोरर्चिः । ८ त्रिषु ज्योतिः । ९ द्वयोरागः । १० द्वयोर्वयः । ११ द्वयोर्वर्चः । १२ द्वयोर्महः । १३ द्वयोः रजः । १४ त्रिषु तमः । १५ द्वयोश्छन्दः । १६ सान्तरनादिमते चान्द्रायणादौ च तपः । १७ द्वयोः सहः । १८ द्वयोर्नभः । १९ द्वे ओकः । २० आश्रयमात्रे ओकाः । २१ द्वयोः पयः । २२ द्वयोरोजः । २३ द्वयोः स्रोतः । २४ चतुर्षु तेजः ।

[1]विद्वान् विदंश्च [2]बीभत्सो हिंस्रो[3]ऽप्यतिशयेत्वमी २३४
वृद्धप्रशस्ययोर्ज्यायान् [4]कनीयांस्तु [5]युवाल्पयोः ॥
[6]वरीयांस्तूरुवरयोः साधीयान् साधुबाढयोः ॥२३५॥

॥ इति सान्ताः ॥

दलेऽपि [7]बर्हं निर्बन्धोपरागार्कादयो [8]ग्रहाः ॥
द्वार्यापीडे क्वाथरसे [9]निर्व्यूहो नागदन्तके ॥२३६॥
तुलासूत्रेऽश्वादिरश्मौ [10]प्रग्राहः प्रग्रहोऽपि च ॥
पत्नीपरिजनादानमूलशापाः परिग्रहाः [11] ॥ २३७ ॥
दारेषु च [12]गृहाः [13]श्रोण्यामप्यारोहो वरस्त्रियाः ॥
[14]व्यूहो वृन्देऽप्यहिर्वृत्रे [15]ऽप्यग्नीन्द्वर्कास्तमोऽपहाः[16]॥
[17]परिच्छदे नृपार्हेऽर्थे परिबर्हो–

॥ इति हान्ताः ॥

ऽव्यया परे ॥

---

१ द्वयोर्विद्वान् । २ द्वयोर्बीभत्सः । ३ द्वयोर्ज्यायान् । ४ द्वयोः कनीयान् । ५ द्वयोर्वरीयान् । ६ द्वयोः साधीयान् । ७ द्वयोर्बर्हम् । ८ निर्बन्धादयो ग्रहाः । ९ चतुर्षु निर्व्यूहः । १० । तुलासूत्रादाविमौ । ११ चतुर्षु परिग्रहः । १२ द्वयोर्गृहशब्दः १३ एकस्मिन्नारोहः । १४ द्वयोर्व्यूहः । १५ द्वयोरहिः । १६ त्रयस्तमोऽपहाः । १७ द्वयोः परिबर्हः ।

[1]आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ॥२३१॥
[2]आप्रगृह्यः स्मृतौ वाक्येऽप्यास्तु [3]स्यात्कोपपीडयोः ॥
पापकुत्सेषदर्थे [4]कु [5]धिङ् निर्भर्त्सननिन्दयोः ॥२४०॥
[6]चान्वाचयसमाहारेतरेतरसमुच्चये ॥
[7]स्वस्त्याशीः क्षेमपुण्यादौ प्रकर्षे [8]लङ्घनेऽप्यति २४१
[9]स्वित्प्रश्ने च वितर्के च [10]तु स्याद्भेदेऽवधारणे ॥
[11]सकृत्सहैकवारे चाप्यारा[12]द्दूरसमीपयोः ॥ २४२ ॥
प्रतीच्यां चरमे [13]पश्चादुता[14]प्यर्थविकल्पयोः ॥२४२॥
पुनःसहार्थयोः [15]शश्वत्साक्षात् [16]प्रत्यक्षतुल्ययोः२४३
खेदानुकम्पासंतोषविस्मयामन्त्रणे [17]बत ॥
[18]हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥ २४४ ॥
[19]प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ॥

[1]इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ॥ २४५ ॥
[2]प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत [3]इत्यपि ॥
[4]यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥२४६॥
[5]मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ॥
[6]वृथा निरर्थकाविध्योर्नाना[7]ऽनेकोभयार्थयोः ॥२४७॥
[8]नु पृच्छायां विकल्पे च [9]पश्चात्सादृश्ययोस्तु ॥
प्रश्नावधारणानुज्ञानुनयामन्त्रणे [10]ननु ॥ २४८ ॥
[11]गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ॥
उपमायां विकल्पे [12]वा [13]सामि त्वर्धे जुगुप्सिते २४९
[14]अमा सह समीपे च [15]कं वारिणि च मूर्धनि ॥
[16]इवेत्थमर्थयोरेव [17]नूनं तर्केऽर्थनिश्चये ॥ २५० ॥
तूष्णीमर्थे सुखे [18]जोषं [19]किं पृच्छायां जुगुप्सने ॥
[20]नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ २५१॥

---

१ पञ्चसु इति शब्दः । २ चतुर्षु पुरस्तात् । ३ अपिशब्दः प्राग्वाच्यं । ४ त्रिषु यावत्तावच्छब्दः । ५ पञ्चस्वथो अथ च शब्दद्वयम् । ६ द्वयोर्वृथा । ७ द्वयोर्ना । ८ द्वयोर्नु शब्दः । ९ द्वयोस्तुशब्दः । १० पञ्चसु ननुशब्दः । ११ पञ्चसु विशब्दः । १२ द्वयोर्वाचशब्दः द्वयोः । १३ सामिशब्दः । १४ द्वयोरमाशब्दः । १५ द्वयोः कम् । १६ द्वयोरेवम् । १७ द्वयोर्नूनम् । १८ द्वयोर्जोषम् । १९ द्वयोः किम् । २० पञ्चसु नामशब्दः ।

[1]आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ॥२३९॥
[2]आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु [3]स्यात्कोपपीडयोः ॥
पापकुत्सेषदर्थे [4]कु [5]धिङ्निर्भर्त्सननिन्दयोः ॥२४०॥
[6]चान्वाचयसमाहारेतरेतरसमुच्चये ॥
[7]स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे [8]लङ्घनेऽप्यति २४१
[9]स्वित्प्रश्ने च वितर्के च [10]तु स्याद्भेदेऽवधारणे ॥
[11]सकृत्सहैकवारे चाप्यारा[12]द्दूरसमीपयोः ॥ २४२ ॥
प्रतीच्यां चरमे [13]पश्चादुता[14]प्यर्थविकल्पयोः ॥२४२॥
पुनःसहार्थयोः [15]शश्वत्साक्षात् [16]प्रत्यक्षतुल्ययोः २४३
खेदानुकम्पासंतोषविस्मयामन्त्रणे [17]वत ॥
[18]हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥ २४४ ॥
[19]प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ॥

---

१ चतुर्षु आङ्शब्दः । २ त्रिषु प्रगृह्यसंज्ञक आनिपातः । ३ द्वयोः आः शब्दः ४ त्रिषु कुशब्दः । ५ द्वयोर्धिक्शब्दः । ६ चतुर्षु च शब्दः । ७ चतुर्षु स्वस्तिशब्दः ८ त्रिषु अतिशब्दः । ९ द्वयोः स्वित्शब्दः । १० द्वयोस्तुशब्दः । ११ द्वयोः सकृत् । १२ द्वयोरारात् । १३ द्वयोः पश्चात् । १४ द्वयोरुतशब्दः । १५ द्वयोः शश्वत् । १६ द्वयोः साक्षात् । १७ पञ्चसु बतशब्दः । १८ चतुर्षु हन्तशब्दः । १९ त्रिष्वर्थेषु लक्षणादौ च प्रतिशब्दः ।

[1]इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ॥ २४५ ॥
[2]प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत [3]इत्यपि ॥
[4]यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥२४६॥
[5]मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ॥
[6]वृथा निरर्थकाविध्योर्नाना[7]ऽनेकोभयार्थयोः ॥२४७॥
[8]नु पृच्छायां विकल्पे च [9]पश्चात्सादृश्ययोरनु ॥
[10]प्रश्नावधारणानुज्ञानुनयामन्त्रणे [11]ननु ॥ २४८ ॥
[11]गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ॥
उपमायां विकल्पे [12]वा [13]सामि त्वर्धे जुगुप्सिते २४९
[14]अमा सह समीपे च [15]कं वारिणि च मूर्धनि ॥
[16]इवेत्थमर्थयोरेव [17]नूनं तर्केऽर्थनिश्चये ॥ २५० ॥
तूष्णीमर्थे सुखे [18]जीवं [19]किं पृच्छायां जुगुप्सने ॥
[20]नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ २५१॥

---

१ पञ्चसु इति शब्दः । २ षट्सु पुरस्तात् । ३ अपिशब्दः प्राकाश्ये । ४ षट्सु यावत्तावच्छब्दः । ५ पञ्चस्वथो अथच मङ्गलम् । ६ द्वयोर्वृथा । ७ द्वयोर्नाना । ८ द्वयोर्नुशब्दः । ९ द्वयोरनुशब्दः । १० पञ्चसु ननुशब्दः । ११ पञ्चसु अपिशब्दः । १२ द्वयोर्वा चशब्दः द्वयोः । १३ सामिशब्दः । १४ द्वयोरमाशब्दः । १५ द्वयोः कम् । १६ द्वयोरिवम् । १७ द्वयोर्नूनम् । १८ द्वयोर्जीवम् । १९ द्वयोः किम् । २० पञ्चसु नामशब्दः ।

[1]अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ॥
[2]हुं वितर्के परिप्रश्ने [3]समयान्तिकमध्ययोः ॥२५२॥
[4]पुनरप्रथमे भेदे [5]निर्निश्चयनिषेधयोः ॥
स्यात्प्रबन्धे चिरातीते निकटागामिके [6]पुरा ॥२५३॥
[7]ऊर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् ॥
स्वर्गे परे च लोके [8]स्वर्वार्तासंभाव्ययोः [9]किल ॥२५४॥
निषेधवाक्यालङ्कारजिज्ञासानुनये [10]खलु ॥
समीपोभयतः [11]शीघ्रसाकल्याभिमुखेऽभितः ॥२५५॥
नामप्राकाशयोः [12]प्रादु [13]र्मिथोऽन्योन्यं रहस्यपि ॥
[14]तिरोऽन्तर्धौ तिर्यगर्थे [15]हा विषादशुगर्तिषु ॥२५६॥
[16]अहहेत्यद्भुते खेदे [17]हि हेताववधारणे ॥

॥ इति नानार्थवर्गः ॥

चिराय चिररात्राय [18]चिरस्याद्याश्चिरार्थकाः ॥

---

१ चतुर्षु अलंशब्दः । २ द्वयोर्हुंशब्दः ३ द्वयोः समया । ४ द्वयोः पुनःशब्दः ५ द्वयोर्निः । ६ चतुर्षु पुराशब्दः । ७ द्वयोरिमे ऊर्यादयस्त्रयः । ८ द्वयोः स्वःशब्दः ९ द्वयोः किलशब्दः । १० चतुर्षु खलुशब्दः । ११ समीपादिषट्स्वभितः । १२ द्वयोः प्रादुः । १३ द्वयोर्मिथः । १४ द्वयोस्तिरः । १५ त्रिषु हा शब्दः । १६ द्वयो[illegible]शब्दः । द्वयोर्हिशब्दः । १७-१ चिरायादयो षट् चिरार्थकाः ।

मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः [1] ॥ १ ॥
स्राक् झटित्यञ्जसाह्नाय द्राङ् मङ्क्षु सपदि [2]द्रुते ॥
बलवत्सुष्ठु किमुत स्वत्यतीव च [3]निर्भरे ॥ २ ॥
पृथग्विनान्तरेणर्ते हिरुङ् नाना च [4]वर्जने ॥
यत्तद्यतस्ततो [5]हेतावसाकल्ये [6]तु चिच्चन ॥ ३ ॥
[7]कदाचिज्जातु सार्धं तु साकं मात्रा समं [8]सह ॥
आनुकूल्यार्थकं [9]प्राध्वं [10]व्यर्थके तु वृथा मुधा ॥४॥
आहो उताहो किमुत [11]विकल्पे किं किमूत च ॥
तु हि च स्म ह वै [12]पादपूरणे [13]पूजने स्वति ॥५॥
[14]दिवाह्नीत्यथ दोषा च नक्तं च [15]रजनाविति ॥
[16]तिर्यगर्थे साचि तिरोऽप्यथ [17]संबोधनार्थकाः ॥६॥
स्युः प्याट् पाडङ्ग हे है भोः [18]समया निकषा हिरुक् ॥
अतर्किते तु [19]सहसा [20]स्यात्पुरः पुरतोऽग्रतः ॥ ७ ॥

---

१ इमे पञ्च पुनरर्थे । २ एते सप्त द्रुते । ३ इमे षट् निर्भरे । ४ षट् वर्जने । ५ चत्वारो हेतौ । ६ द्वयं साकल्ये । ७ द्वौ कदाचित्काले । ८ पञ्च सहेत्यर्थे । ९ एकमानुकूल्ये । १० द्वौ व्यर्थे । ११ षट् विकल्पे । १२ षट् पादपूरणे । १३ द्वौ पूजने । १४ अह्नीत्यर्थे दिवाशब्दः । १५ द्वौ रात्रावित्यर्थे । १६ द्वौ तिर्यगर्थे । १७ षट् सम्बोधनार्थकाः । १८ त्रयः सामीप्ये । १९ सहसेत्येकमतर्कितेऽर्थे । २० त्रयोऽग्रे इत्यर्थे ।

स्वाहा [१]देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा ॥
[२]किंचिदीषन्मनागल्पे [३]प्रेत्यामुत्र [३]भवान्तरे ॥८॥
व वा यथा तथैवैवं [४]साम्येऽहो ही च [५]विस्मये ॥
[६]मौने तु तूष्णीं तूष्णीकां सद्यः सपदि [७]तत्क्षणे॥९॥
दिष्ट्या समुपजोषं [८]चेत्यानन्देऽथान्तरेऽन्तरा ॥
अन्तरेण च [९]मध्ये स्युः [१०]प्रसह्य तु हठार्थकम् ॥१०॥
[११]युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं [१२]शश्वदनारते ॥
[१३]अभावे नह्य नो नापि मा स्म मालं च [१४]वारणे ११
[१४]पक्षान्तरे चेद्यदि च [१५]तत्त्वे त्वद्धाञ्जसा द्वयम्॥
[१६]प्राकाश्ये प्रादुराविः स्यादोमेवं परमं [१७]मते ॥१२॥
समन्ततस्तु परितः [१८]सर्वतो विष्वगित्यपि ॥
अकामानुमतौ [१९]काममसूयोपगमेऽस्तु [२०]च ॥१३॥

---

१ पञ्च देवहविर्दाने। २ त्रयोऽल्पे। ३ द्वौ जन्मान्तरे। ४ षट् साम्ये। ५ द्वौ विस्मये। ६ द्वौ मौने। ७ द्वौ तत्काले। ८ द्वावानन्दे। ९ त्रयो मध्ये। एवं हठार्थम्। १० द्वौ युक्ते। ११ द्वावनारते। १२ चत्वारोऽभावे। १३ त्रयो वारणे। १४ द्वौ पक्षान्तरे। १५ द्वौ तत्त्वार्थे। १६ द्वौ प्राकाश्ये। १७ त्रयो मते १८ चाव ॥ सर्वत इत्यर्थं। १९ इदमप्यनुमतेऽस्मिन्। २० इदमपीत्यर्थम्।

ननु च स्याद्विरोधोक्तौ [2]कच्चित्कामप्रवेदने ॥
निषमं दुःषमं [3]गर्ह्ये यथास्वं तु [4]यथायथम् ॥ १४ ॥
मृषा मिथ्या च [5]वितथे [6]यथार्थं तु यथातथम् ॥
स्युरेवं तु [7]पुनर्वैत्यवधारणवाचकाः ॥ १५ ॥
[8]प्रागतीतार्थकं नूनमवश्यं [9]निश्चये द्वयम् ॥
[10]संवद्वर्षेऽवरे [11]त्वर्वागामेवं[12,13]स्वयमात्मना ॥१६॥
अल्पे [14]नीचैर्महत्युच्चैः [15] [16]प्रायोभूम्न्यद्रुते [17]शनैः॥
[18]सना नित्ये [19] बहिर्बाह्ये [20]स्मातीते [21]ऽस्तमदर्शने॥
[22]अस्ति सत्त्वे [23]रुषोक्तावु [24]ऊं प्रश्नेऽनुनये [25]त्वयि॥
[26]हूं तर्के [27]स्यादुषा रात्रेरवसाने [28]नमो नतौ॥१८॥
[29]पुनरर्थेऽङ्ग निन्दायां [30]दुष्ठु [31]सुष्ठु प्रशंसने ॥

---

१ इत्येकमिदम् । २ इत्येकमिदम् । ३ द्वौ गर्ह्ये । ४ द्वौ यथायोग्ये । ५ द्वौ वितथे । ६ द्वौ सत्ये । ७ पञ्च [illegible] । ८ प्रागिति अतीतार्थकम् । ९ द्वौ निश्चये । १० संवदिति वर्षे । ११ अर्वागिति अवरे । [illegible] । १३ स्वयमित्या त्मनेत्यर्थे । १४ एकमल्पे । १५ एकं महति । १६ एकं भूम्नि १७ एकं मद्रुते १८ एकं नित्ये १९ एकं बाह्ये । २० एकमतीते । २१ एकं दर्शनाभावे । २२ एकं सत्त्वे । २३ एकं कोपोक्तौ । २४ एकं प्रश्ने । एकमनुनये । २६ एकं तर्के । २७ एकं रात्र्यवसाने । २८ एकं नतौ । २९ एकं पुनरर्थे । ३० द्वयं प्रशंसने ।

[1]सायं साये प्रगे प्रातः [2]प्रभाते निकषाऽन्तिके[3] ॥ १९ ॥
[4]परुत्परा[5]र्यैषमो[6]ऽब्दे पूर्वे पूर्वतरे यति ॥
[7]अद्यात्राह्न्यथ [8]पूर्वेऽह्नी[9]त्यादौ पूर्वोत्तरापरात् ॥ २० ॥
तथाऽधरान्यान्यतरेतरात्पूर्वेद्युरादयः ॥
उभयद्युश्चोभयेद्युः परे त्वह्नि [10]परेद्यवि ॥ २१ ॥
[11]ह्यो गतेऽनागतेऽह्नि [12]श्वः [13]परश्वस्तु परेऽहनि ॥
[14]तदा तदानीं [15]युगपदेकदा [16]सर्वदा सदा ॥ २२ ॥
[17]एतर्हि संप्रतीदानीमधुना सांप्रतं [18]तथा ॥
दिग्देशकाले [19]पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २३ ॥

॥ इत्यव्ययवर्गः ॥ ४ ॥

---

१ एकं साये । २ द्वौ प्रभाते । ३ एकमन्तिके । ४ परुत् गतवर्षे । ५ परारि गतवर्षपूर्ववर्षे । ७ अस्मिन्नहनीत्यर्थेऽद्य । ८ अथेत्यारभ्य पूर्वेद्युरादय इत्यस्य व्याख्या । ९ पूर्वस्मिन्नहनीत्यर्थे उत्तरेद्युः । अपरस्मिन्नहनि अपरेद्युः । अधरस्मिन्नहनि अधरेद्युः । अन्यस्मिन्नहनि अन्येद्युः । अन्यतरस्मिन्नहनि उभयद्युः । १० द्वयं परेऽहनि । ११ एकं गतेऽहनि । १२ एकमनागतेऽहनि । १३ एकं परेऽहनि । १४ द्वौ तस्मिन्काले । १५ युगपदिति एकदैकस्मिन्काले । १६ एवं सदेति सर्वस्मिन्काले । १७ एतस्मिन्काले । १८ द्वयं समुच्चये । १९ पूर्वादौ दिग्देशकाले प्रागादयः ।

[1]सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ॥
अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥ १ ॥
[2]लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ॥
स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ॥ २ ॥
नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम् ॥
अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥ ३
तल् वृन्देयेनिकट्यत्रा वैरमैथुनिकादिवुन् ॥
स्त्रीभावादावनिक्तिण्ण्वुल्णच्ण्यक्यप्युजिञङ्निश ४
उणादिषु निरूरीश्च ङ्यावुङन्तं चलं स्तिरम् ॥
तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा या दिक् ॥ ५ ॥
घञो ञः सा क्रियाऽस्यां चेद्दाण्डपाता हि फाल्गुनी ॥
श्येनम्पाता च मृगया तलम्पाता स्वधेति दिक् ॥ ६ ॥

---

१ सलिङ्गशास्त्रैः पाणिन्याद्युक्तलिङ्गानुशासनसहितैः । सन्नादिप्रत्ययजैर्दिवच्छो-मांदिरादेः । कृद्भिः ध्वस्वकाकादिभिः । तद्धितप्रत्ययान्तैर्वाणस्थालादिभिः । समासजैर्द-न्द्वोत्तरपदोद्विगुरित्यादियोक्तैः । बाहुल्येन पूर्वमनुक्तैः । अत्रदेरयं संग्रहः क्रियते इह इदंपदे संकीर्णवल्लिङ्गमुन्नयेत् । २ इति लिङ्गशेषविधिः विधिपैः प्रागुक्तैः लिङ्गोक्ते-रपबाधितः स्यात्तदा लिङ्गशेषविधिर्व्यापी व्यापको भवतीत्यर्थः । द्वितीयश्लोका-दारभ्य दशमश्लोकपर्यन्ता ये शब्दास्ते सर्वे स्त्रीलिङ्गा ज्ञेयाः ।

स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि ॥
लङ्का शेफालिका टीका धातकी पञ्जिकाऽऽढकी ॥७॥
सिध्मका सारिका हिक्का प्राचिकोल्का पिपीलिका ॥
तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः ॥ ८ ॥
पिच्छावितण्डाकाकिण्यश्चूर्णिः शाणी द्रुणी दरत् ॥
सातिः कन्था तथाऽऽसन्दी नाभी राजसभापि च ॥९॥
झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला ॥
लाक्षा लिक्षा च गण्डूषा गृध्रसी च मसीमसी ॥१०॥

॥ इति स्त्रीलिङ्गसंग्रहः ॥

[1]पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ॥
स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥
करगण्डोष्ठदोर्दन्तकण्ठकेशनखस्तनाः ॥
अह्नाहान्ताः क्षेभेदा रात्रान्ताः प्रागसंख्यकाः ॥ १२ ॥

१ भेदाः सुपर्वादयः अनुचराः नन्द्यादयः तैः सहिताः। सुरासुराः देवदैत्याः स्वर्गः पर्यायैः पर्याय वाचकैः सार्द्धं एव पुंस्त्वे पुंसि वर्तन्ते इत्यर्थः। [illegible] पुंसि ज्ञेयाः।

श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः ॥
कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥१३॥
कषणभमरोपान्ता यद्यदन्ता अमी अथ ॥
पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥१४॥
नाम्न्यकर्तरि भावे च घञजब्नङ्घाथुचः ॥
ल्युः कर्तरीमनिज् भावे को घोः किः प्रादितोऽन्यतः ॥
द्वन्द्वेऽश्ववडवावश्ववडवा न समाहृते ॥
गान्तः सूर्येन्दुपर्यायपूर्वोऽयः पूर्वकोऽपि च ॥ १६ ॥
वटकश्चानुवाकश्च रल्लकश्च कुडंगकः ॥
पुङ्खो न्युङ्खः समुद्गश्च विटपट्टघटाः खटाः ॥१७॥
कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत् ॥
गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥१८॥
दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः ॥
कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सयूपकौ ॥ १९ ॥
आतपः क्षत्रियो नाभिः कुणपक्षुरकेदराः ॥
दस्तुरमचुकाश्च गोलहिङ्गुलपुद्गलाः ॥ २० ॥
वेताल मल्लमल्लाश्च पुरोडाशोऽपि पट्टिशः ।

कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥ २१ ॥

॥ इति पुंलिङ्गशेषः ॥

[1]द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् ॥
शीतोष्णमांस रुधिरमुखाक्षिद्रविणं बलम् ॥ २२ ॥
फलहेमशुल्बलोहसुखदुःखशुभाशुभम् ॥
जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥ २३ ॥
कोट्याः शतादिसंख्याऽन्या वा लक्षा नियुतं च तत् ।
द्व्यच्कमसिसुसन्नन्तं यनादन्तमकर्तरि ॥ २४ ॥
त्रान्तं सलोपधं शिष्टं रात्रं प्राक्संख्ययान्वितम् ॥
पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥ २५ ॥
द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः ॥
षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा ॥२६॥
शालार्थापि परा राजामनुष्यार्थादराजकात् ॥
दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥ २७ ॥
उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ॥

---

१ द्वाविंशतिश्लोकमारभ्य सार्धत्रिषष्ठ्यश्लोक पर्यन्तं ये [illegible] [illegible] [illegible] [illegible] हेतुः ।

कोपज्ञकोपकर्मादिकन्त्योशीनरनामसु ॥ २८ ॥
भावे नणकचिद्भ्योऽन्यो समूहे भावकर्मणोः ॥
अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः ॥२९॥
क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके ॥
चोचं पिच्छं गृहस्थूणं तिरीटं मर्म योजनम् ॥ ३० ॥
राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ॥
माणिक्यभाष्यसिंदूरचीरचीवरपिञ्जरम् ॥ ३१ ॥
लोकायतं हरितालं विदलस्थालबाह्लिकम् ॥

॥ इति क्लीबसंग्रहः ॥

१पुंन्नपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥
मोदकस्तण्डकटङ्कः शाटकः कर्पटोऽर्बुदः ॥
पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥
कुष्टं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम् ॥
कवियं कन्दकार्पासं पारावारं युगन्धरम् ॥ ३४ ॥
यूपं प्रग्रीवपात्रीवं यूषं चमसचिक्कसौ ॥

---

१ [illegible]

अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ॥३४॥
तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥
॥ इति पुंनपुंसकसंग्रहवर्गः ॥

[1]स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः ॥ ३६ ॥
जातिभेदाः पुमाख्याश्च स्त्रीयोगैः सह मल्लकः ॥
ऊर्मिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः ॥३७॥
मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कटी कुटी ॥

॥ इति स्त्रीपुंसकशेषसंग्रहवर्गः ॥

[2]स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् क्वचिच्च वुञ् ॥३८॥
औचित्यमौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः ॥
षष्ठ्यन्तप्राक्पदाः सेनाछायाशालासुरानिशाः ॥ ३९ ॥
स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ॥
आबन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप् ॥४०॥

---

१ षट्त्रिंशच्छ्लोकमारभ्य सार्द्धसप्तत्रिंशच्छ्लोकपर्यन्तं ये शब्दास्ते स्त्रियां पुंसि च वर्तन्ते। २ अष्टत्रिंशच्छ्लोकार्द्धमारभ्य सार्द्धचत्वारिंशच्छ्लोकपर्यन्तं ये शब्दास्ते स्त्रियां क्लीबे च वर्तन्ते।

त्रिखट्वं च त्रिखट्वा च त्रितक्षं च त्रितक्ष्यपि ॥

॥ इति स्त्रीनपुंसकशेषः ॥

त्रिषु पात्री पुटी वाटी पेटीकुवलदाडिमौ[1] ॥ ४१ ॥

॥ इति त्रिलिङ्गशेषसंग्रहः ॥

परं लिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत् ॥
[2]अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ॥ ४२ ॥
तद्धितार्थो द्विगुः संख्यासर्वनामतदन्तकाः ॥
बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतम् ॥ ४३ ॥
गुणद्रव्यक्रियायोगोपाधिभिः परगामिनः[3] ॥
कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि ॥ ४४ ॥
अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः ॥
षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ॥ ४५ ॥

---

१ एकच वारिकच्छोलोदादि ये चान्यास्ते सर्वे त्रिलिङ्गाः। २ अर्थान्तादयः पर-स्यैव लिङ्गं प्राप्नुवन्ति। स्वप्रधाने उभयप्रधाने द्वन्द्वे तत्पुरुषे च परपदस्य यल्लिङ्गं तदेव लिङ्गं स्यात्। अर्धशब्दस्य द्व—अर्धं ग्रा इत्यादि। ३ गुणद्रव्ये क्रिया-योगेन क्रियायोगेन तद्विशिष्टविशेषणं ते धर्मिलिङ्गभाजः। ४ भावेऽर्थे कर्तरि कृत्याः कर्मणि कर्तरि च यथालक्ष्यं इत्याद्याः परलिङ्गाः।

परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः[१] ॥

॥ इति लिङ्गादिसंग्रहवर्गः ॥

[२]इत्यमरसिंहकृतौ नामलिङ्गानुशासने[२] ॥
सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः ॥४६ ॥

॥ तृतीयं काण्डं संपूर्णम् ॥

॥ समाप्तोऽयं ग्रन्थ ॥



---

१ तत्र रक्तार्थे तेन रक्तमित्याद्यर्थे अणादितद्धितप्रत्ययान्तानामर्थभेदका अनेकार्थं शब्देनाभूताः विशिष्टवाद्यन्त्यलिङ्गा इत्यर्थः। षट्संज्ञकाः ष्णान्तनान्तसङ्ख्या कतिशब्दश्च त्रिषु समाः त्रिलिङ्ग्यां सरूपाः नित्यं बहुषु वर्तमानाः अतो बहुवचनान्ताश्च। युष्मदस्मच्छब्दौ तिङन्ताव्ययानि च त्रिषु समानानि। २ विरोधे सति परं लिङ्गानुशासनं प्रवर्तते। शेषं शिष्टप्रयोगतः शिष्टानां महाभाष्यकारादीनां प्रयोगात् लिङ्गं ज्ञेयम् ॥

# अथैकाक्षरी कोशः ।

अकारो वासुदेवः स्यादाकारस्तु पितामहः ॥
पूजायामपि मांगल्ये आकारः परिकीर्तितः ॥ १ ॥
इकार उच्यते कामो लक्ष्मीरीकार उच्यते ॥
उकारः शंकरः प्रोक्तः ऊकारश्चापि लक्षणे ॥ २ ॥
रक्षणे चाथ ऋकार ॠकारो ब्रह्मणि स्मृतः ॥
ऋकारो वेदमाता स्याद्दकारो दनुजप्रसूः ॥ ३ ॥
ऌकारो देवजातिनां माता सद्भिः प्रकीर्तिता ॥
ॡकारः स्मर्यते पूर्वजननी शब्दकोविदैः ॥ ४ ॥
एकार उच्यते विष्णुरैकारः स्यान्महेश्वरः ॥
ओकारस्तु भवेद्ब्रह्मा औकारोनन्त उच्यते ॥ ५ ॥
अस्याच्च पारमं ब्रह्म अः स्याच्चैव महेश्वरः ॥
कः प्रजापतिरुद्दिष्टः कोऽर्कवाय्वनलेषु च ॥ ६ ॥
कश्चात्मनि मयूरे च कः प्रकाश उदाहृतः ॥
कं शिरोजानमाख्यातं कं सुखं च प्रकीर्तितम् ॥ ७ ॥
पृथिव्यां कुः समाख्याता कुः शब्देपि प्रकीर्तितः ॥

खमिन्द्रिये खमाकाशे खः स्वर्गेऽपि प्रकीर्तितः ॥ ८ ॥
सामान्ये च तथा शून्ये खशब्दः परिकीर्तितः ॥
गो गणेशः समुद्दिष्टो गन्धर्वो गः प्रकीर्तितः ॥ ९ ॥
गं गीतं गो च गाथा स्याद् गौश्च धेनुः सरस्वती ॥
घो घण्टाथ समाख्याता घो घनश्च प्रकीर्तितः ॥ १० ॥
घण्टघोंहननेऽघर्मे घुर्घोणा घुर्घ्वनावपि ॥
ङकारो भैरवः ख्यातो ङकारो विषयस्पृहा ॥ ११ ॥
चश्चन्द्रमा समाख्यातो भास्करे तास्करे मतः ॥
निर्मलं छं समाख्यातं तरले छं प्रकीर्तितः ॥ १२ ॥
छेदके छः समाख्यातो विद्वद्भिः शब्दकोविदैः ॥
जकारो गायने प्रोक्तो जयने जः प्रकीर्तितः ॥ १३ ॥
जेता जश्च प्रकथितः सूरिभिः शब्दशासने ॥
रवौ झकारः कथितो नष्टे झश्चोच्यते बुधैः ॥ १४ ॥
सकारश्च तथा वायौ नेपथ्ये समुदाहृतः ॥
ञकारो गायने प्रोक्तो ञकारो झर्झरध्वनौ ॥ १५ ॥
ठो धरित्र्यांकके ठो ध्वनौ च प्रकीर्तितः ॥
ठकारो जनतायां स्याट्ठो ध्वनौ च शठेपि च ॥ १६ ॥

ठो महेशः समाख्यातठश्च शून्यः प्रकीर्तितः ॥
बृहद्ध्वनौ च ठः प्रोक्तस्तथा चन्द्रस्य मण्डले ॥ १७ ॥
डकार शङ्करे त्रासे ध्वनौ भीमे निरूपते ॥
ढकारः कीर्तिता ढक्का निर्गुणे निर्धने मतः ॥ १८ ॥
णाकरः सूकरे ज्ञाने निर्णये निर्णयेपि च ॥
तकारः कीर्तितश्चौरे क्रोडपुच्छे प्रकीर्तितः ॥ १९ ॥
शिलोच्चये थकारः स्यात्थकारो नयरक्षणे ॥
दकारोऽग्रे कलत्रे च छेदे दाने च दातरि ॥ २० ॥
धं धने सधने धः स्याद्विधातरि मनावपि ॥
धेषणा धीः समाख्याता धूश्चैवं भारचित्तयोः ॥२१॥
ता नश्च समाख्यातस्तारायां नः प्रकीर्तितः ॥
कारः सौगते बुद्धौ स्तुतौ वृक्षे प्रकीर्तितः ॥ २२ ॥
शब्दः स्वागते बन्धौ वृक्षे सूर्ये च कीर्तितः ॥
कुबेरः समाख्यातः पश्चिमे च प्रकीर्तितः ॥२३॥
ने पः समाख्यातः पास्थत्पाने च पातरि ॥
फ वाते फकारः स्यात्तथाऽऽह्वाने प्रकीर्तितः ॥२४॥
कारे पि च फः प्रोक्तस्तथा निष्फलभाषणे ॥

वकारो वरुणः प्रोक्तः कलशे वः फलेपि च ॥ २५ ॥
वक्षः स्थले च वः प्रोक्तो गदायां समुदाहृतः ॥
नक्षत्रे भवधाः प्राहुर्भवने भः प्रकीर्तितः ॥ २६ ॥
दीप्तिर्भा स्याच्च भूर्भूमिर्भीर्भयं कथितं बुधैः ॥
मः शिवश्चन्द्रमा वेधा मा लक्ष्मीश्च प्रकीर्तिता ॥२७॥
मा च मातरि माने च बन्धने मः प्रकीर्तितः ॥
यशो यः कथितः प्राज्ञैर्यो वायुरितिशब्दितः ॥ २८ ॥
याने यातरि यस्त्यागे कथितः शब्दवेदिभिः ॥
रश्च रामेऽनिले वह्नौ भूमावपि धनेपि च २९ ॥
इन्द्रिये धनरोधे च रुभये त्र प्रकीर्तितः ॥
ला दीप्तौ द्यां लश्च भूमौ भये चाह्लादनेपि च ॥३०॥
लो वाते लवणो च स्याल्लो दीने च प्रकीर्तितः ॥
लः श्लेषे चाशये चैव प्रलये साधनेपि लः ॥ ३१ ॥
मानसे वरुणो चैव लकारः सान्त्वनेपि त्र ॥
विश्च पक्षी निगदितो गगनं परिकीर्तितम् ॥ ३२ ॥
शं सुखं शंकरः श्रेयः शश्व सीम्नि निगद्यते ॥
शयने शः समाख्यातो हिंसायां शो निगद्यते ॥ ३३ ॥

षः कीर्तितो बुधैः श्रेष्ठः पश्च गम्भीरलोचने ॥
उपसर्गे परोक्षे च षकारः परिकीर्तितः ॥ ३४ ॥
सः कोपे वरुणे सः स्यात्तथा शूलिनी कीर्तितः ॥
सा च लक्ष्मीर्बुधैः प्रोक्ता गौरी सा च सईश्वरः ॥३५॥
हः कोपे वरुणे हश्च तथा शूली प्रकीर्तितः ॥
हिः पद्मावरणे प्रोक्तो हि- याद्धे त्ववधारणे ॥ ३६ ॥
क्षः क्षेत्रे वक्षसि प्रोक्तो बुधै क्षः शब्दशासने ॥
क्षिः क्षत्रे क्षान्ते च नृसिंहे च प्रकीर्तितः ॥ ३७ ॥
आगमेभ्योऽभिधानेभ्यो धातुभ्यः शब्दशासनात् ॥
एवमेकाक्षरं नामाभिधानं विहितं मया ॥ ३८ ॥

॥ इत्येकाक्षरीकोशः समाप्तः ॥



बाबू काशीप्रसाद भार्गव द्वारा, भार्गवभूषण प्रेस, त्रिलोचन-काशी में मुद्रित ।